इत्यमरः
विरामान्तद्रुतद्वंद्वाल्लघुद्वंद्वेन जायते
ताराख्यः प्रतिमराठोऽसौ रसयोर्वीररौद्रयोः ३४१
इति तारः
लघुत्रयाद्विरामान्ताद्विचारः करुणे भवेत्
इति विचारः
कुन्दो विराममध्येन लत्रयेणाद्भुते भवेत् ३४२
इति कुन्दः
ते शृङ्गारेऽपि चत्वारो गीयन्ते लक्ष्मवेदिभिः ३४३
इति चतुर्विधप्रतिमराठलक्षणम्
बद्धो निःसारुतालेन प्रोक्तो निःसारुको बिधैः
वैकुन्दानन्दकान्ताराः समरो वाञ्छितस्तथा ३४४
विशालश्चेति स प्रोक्तः षड्विधः सूरिशार्ङ्गिणा
द्रुतद्वंद्वाल्लघुद्वंद्वाद्वैकुन्दो मङ्गले भवेत्
कुर्यादानन्दमानन्दे विरामान्तद्रुतद्वयात् ३४५
इति वैकुन्दानन्दौ
कान्तारो लगुरुभ्यां स्याद्विप्रलम्भे स गीयते
इति कान्तारः
लघुद्वयाद्विरामान्तात्समरो वीरगोचरः ३४६
इति समरः
लघुत्रयाद्द्रुतद्वंद्वाद्वाञ्छितो वाञ्छितप्रदः
इति वाञ्छितः
संभोगे स्याद्विशालाख्यो लाद्द्रुतद्वयतो लघोः ३४७
इति विशलः
इति षड्विधो निःसारुकः
अड्डतालेन तालेनाड्डतालः परिकीर्तितः
निशङ्कशङ्कशीलाश्च चारोऽथ मकरन्दकः ३४८
विजयश्चेति स प्रोक्तः षोढा सोढलमूनुना
लगुरुभ्यां द्रुतद्वंद्वान्निःशङ्को विस्मये भवेत् ३४९

इति निःशङ्कः
लघोर्द्रुतद्वयेन स्याच्छङ्कः शृङ्गारवीरयोः
इति शङ्कः
शान्ते शीलो विरामान्तद्रुतद्वंद्वाल्लघोर्भवेत्  ३५०
इति शीलः
द्रुतद्वंद्वाल्लगाभ्यां स्याच्चारो वीरेऽद्भुते रसे
इति चारः
शृङ्गारे मकरन्दः स्याद्द्रुतद्वंद्वात्परे गुरौ  ३५१
इति मकरन्दः
विजयाख्यो रसे वीरे द्रुताभ्यां लघुना भवेत्  ३५२
इति विजयः
इति षड्विधोऽङ्गतालः
रासको रासतालेन स चतुर्धा निरूपितः
विनोदो वरदो नन्दः कम्बुजश्चेति शार्ङ्गिणा
आलापान्तध्रुवपदाद्विनोदः कौतुके भवेत्  ३५३
इति विनोदः
ध्रुवादालापमध्यात्तु वरदो देवतास्तुतौ  ३५४
इति वरदः
खण्डमाद्यं द्विखण्डस्योद्ग्राहस्याऽऽलापनिर्मितम्
यस्यासौ रासको नन्दो गीयतेऽभ्युदयप्रदः  ३५५
इति नन्दः
आलापादेर्ध्रुवपदात्कम्बुजः करुणे भवेत्
इति कम्बुजः
सर्वेषु रासकेष्वेषु द्विखण्डोद्ग्राहकल्पना  ३५६
इति चतुर्विधरासकलक्षणम्
एकताली भवेत्तालेनैकताल्या त्रिधा च सा
रमा च चन्द्रिका तद्वद्विपुलेत्यथ लक्षणम्  ३५७
सकृद्विरतिरुद्ग्राहोऽन्तरस्त्वक्षरनिर्मितः
यस्यामसौ रमा सा च गातृश्रोत्रोः श्रिये भवेत्  ३५८

इति रमा
उद्ग्राहो द्विदलो यस्यामालापरचितोऽन्तरः
घनद्रुता घनयतिर्घनानुप्रासयोगिनी
चन्द्रिका सैकताली स्याद्भूरिसौभाग्यदायिनी  ३५९
इति चन्द्रिका
आलापपूर्वकोद्ग्राहा विपुलानन्ददायिनी
आलापो गमकालप्तिरक्षरैर्वर्जिता मता
सैव प्रयोगशब्देन शार्ङ्गदेवेन शब्दिता  ३६०
इति विपुला
इति त्रिविधैकतालीलक्षणम्
इति सालगसूडलक्षणम्
गुणान्वितं दोषहीनं नवं रूपकमुत्तमम्  ३६१
रागेण धातुमातुभ्यां तथाताललयौडुवैः
नूतनै रूपकं नूत्नं राम स्थायान्तरैर्नवः  ३६२
धातु रागांशभेदेन मातोस्तु नवता भवेत्
प्रतिपाद्यविशेषेण रसालंकारभेदतः  ३६३
लयग्रहविशेषेण तालानां नवता मता
तालविश्रामतोऽन्येन विश्रामेण लयो नवः  ३६४
छन्दोगणग्रहन्यासप्रबन्धावयवैर्नवैः
औडुवापरपर्याया रचना नवतां व्रजेत्  ३६५
रूपकं त्रिविधं ज्ञेयं परिवृत्तं पटान्तरम्
भञ्जनीसंश्रितं चेति शार्ङ्गदेवेन कीर्तितम्  ३६६
खल्लोत्तारानुसारौ तु रूपकेष्वधमौ मतौ
रूपकं पूर्वसंसिद्धं स्वस्थानेन नवेन यत्  ३६७
यद्वा रागेण तालेन कृतं तत्परिवृत्तकम्
यत्र स्थायिनि यत्स्थानं रूपकं रचितं पुरा  ३६८
तत्स्वस्थानं तदन्यत्त्वं स्थाय्यैव परिवर्तनम्
परिवृत्तं रागतालपरिवर्तभवं स्फुटम्  ३६९
तस्मिन्नेव रसे रागे ताले च रचितं भवेत्

मातुस्थायविचित्रत्वाद्गुणोदारं पटान्तरम् ३७०
केनापि रूपकं गीतं निजादन्येन धातुना
येन तस्यान्यधातुत्वाद्भञ्जनीसंश्रितं मतम् ३७१
प्राग्रूपकगतास्थायाः स्थानान्तरगता यदि
मात्वन्तरेण रच्यन्ते खल्लोत्तारस्तदा भवेत् ३७२
रागे ताले च तत्रैव किंचिद्धातुविलक्षणः
मात्वन्तरेणानुसारो गुणोत्कर्षविवर्जितः ३७३
इति पञ्चरूपकभेदलक्षणम्
व्यक्तं पूर्णं प्रसन्नं च सुकुमारमलंकृतम्
समं सुरक्तं श्लक्ष्णं च विकृष्टं मधुरं तथा ३७४
दशैते स्युर्गुणा गीते तत्र व्यक्तं स्फुटैः स्वरैः
प्रकृतिप्रत्ययैश्चोक्तं छन्दोरागपदैः स्वरैः ३७५
पूर्णं पूर्णाङ्गगमकं प्रसन्नं प्रकटार्थकम्
सुकुमारं कण्ठभवं त्रिस्थानोत्थमलंकृतम् ३७६
समवर्णलयस्थानं सममित्यभिधीयते
सुरक्तं वल्लकीवंशकण्ठध्वन्यैकतायुतम् ३७७
नीचोच्चद्रुतमध्यादौ श्लक्ष्णत्वे श्लक्ष्णमुच्यते
उच्चैरुच्चारणादुक्तं विकृष्टं भरतादिभिः
मधुरं धुर्यलावण्यपूर्णं जनमनोहरम् ३८७
इति गीतगुणाः
दुष्टं लोकेन शास्त्रेण शुर्तिकालविरोधि च
पुनरुक्तं कलाबाह्यं गतक्रममपार्थकम्
ग्राम्यं संदिग्धमित्येवं दशधा गीतदुष्टता ३७९
इति गीतदोषाः
इति
श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोढलदेवनन्दननिःशङ्कश्रीशार्ङ्गदेवविरचिते संगीतरत्नाकरे प्रबन्धाध्यायश्चतुर्थः समाप्तः ४

अथ पञ्चमस्तालाध्यायः

नानामार्गैर्लयो यत्र यतीनां स्यात्कलानिधौ
तं दक्षिणं शिवं नौमि चित्रं वृत्तिमयं ध्रुवम् १
अथ तालः
तालस्तलप्रतिष्ठायामिति धातोर्घञि स्मृतः
गीतं वाद्यं तथा नृत्यं यतस्ताले प्रतिष्ठितम् २
कालो लघ्वादिमितया क्रियया संमितो मितिम्
गीतादेर्विदधत्तालः स च द्वेधा बुधैः स्मृतः ३
मार्गदेशीगतत्वेन तत्राऽऽद्यस्य क्रिया द्विधा
निःशब्दा शब्दयुक्ता च निःशब्दा तु कलोच्यते ४
स्यादावापोऽथ निष्क्रामो विक्षेपश्च प्रवेशकः
निःशब्देति चतुर्धोक्ता सशब्दाऽपि चतुर्विधा
ध्रुवः शम्पा ततस्तालः संनिपात इतीरिता ५
पातः कला च सा ज्ञेया तासां लक्ष्माभिदध्महे ६
आवापस्तत्र हस्तस्योत्तानस्याङ्गुलिकुञ्चनम्
निष्क्रामोऽधस्तलस्य स्यादङ्गुलीनां प्रसारणम् ७
क्षेपो दक्षिणपार्श्वस्योत्तानस्य प्रसृताङ्गुलेः
विक्षेपोऽधस्तलस्यास्य प्रवेशोऽङ्गुलिकुञ्चनम् ८
ध्रुवो हस्तस्य पातः स्याच्छोटिकाशब्दपूर्वकः
शम्पा दक्षिणहस्तस्य तालो वामकरस्य तु ९
उभयोः संनिपातः स्यात्तासां मार्गवशान्मितिः १०
मार्गाः स्युस्तत्र चात्वारो ध्रुवश्चित्रश्च वार्तिकः
दक्षिणश्चेति तत्र स्याद्ध्रुवके मात्रिका कला
शेषेषु द्वे चतस्रोऽष्टौ क्रमान्मात्राः कला भवेत् ११
ध्रुवका सर्पिणी कृष्णा पद्मिनी च विसर्जिता
विक्षिप्ताख्या पताका च मात्रा स्यात्पतिताऽष्टमी १२
सशब्दा तु ध्रुवा ज्ञेया सर्पिणी वामगामिनी
कृष्णा दक्षिणतो गन्त्री पद्मिनी स्यादधोगता १३
विसर्जिता बहिर्याता विक्षिप्ता कुञ्चनात्मिका
पताका तूर्ध्वगमनात्पतिता करपातनात्

ध्रुवपाते प्रयोज्यास्ता नाऽऽवापादौ कदाचन १४
ध्रुवका पतिता चित्रे वार्तिके त्वादिमे उभे
अन्त्ये द्वे च प्रयोक्तव्ये क्रमादष्टौ च दक्षिणे १५
पञ्चलध्वक्षरोच्चारमिता मात्रेह कथ्यते
अनया मात्रयाऽत्र स्याल्लघुगुर्वादिकल्पना १६
चतुरस्रस्तथा त्र्यस्र इति तालो द्विधा मतः
चञ्चत्पुटश्चाचपुट इति नाम्नी तयोः क्रमात् १७
यथाक्षरश्च द्विकलश्चतुष्कल इति त्रिधा
प्रत्येकं तौ नामगतैर्गलैस्तत्र यथाक्षरः
अयमेककलश्चञ्चत्पुटे त्वन्त्यं प्लुतं विदुः १८
ऽऽ । ऽ इति यथाक्षरश्चञ्चत्पुटः ऽ । ऽ । इति यथाक्षरश्चाचपुटः ।
गुरुः कलाऽत्र द्विकलेऽष्टावाद्येऽन्यत्र षट्कला १९
ऽऽ ऽऽ ऽऽ ऽऽ इति द्विकलश्चञ्चत्पुटः ऽऽ ऽऽ ऽऽ इति द्विकलश्चाचपुटः
चतुष्कलौ तौ द्विगुणौ
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति चतुष्कलश्चञ्चत्पुटः ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
इति चतुष्कलश्चाचपुटः ।
द्विकले द्विकलो मतः २०
पादभागः कलानां तु चतुष्केण चतुष्कले
पादभागैश्चतुर्भिस्तैर्मात्रा स्यान्मन्द्रकादिषु २१
षट्पितापुत्रकस्त्र्यस्रभेदः सोऽपि तथा त्रिधा
यथाक्षरे विशेषोऽत्र प्लुतमाद्यन्तयोर्भवेत् २२
ऽे । ऽऽ । ऽे इति यथाक्षरः षट्पितापुत्रकः
द्विकले द्वादश कलाः
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ इति द्विकलः षट्पितापुत्रकः
द्विगुणास्तु चतुष्कले
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति चतुष्कलः षट्पितापुत्रकः
उत्तरः पञ्चपाणिश्च तस्य संज्ञाद्वयं परम्
उद्धट्टोऽपि त्र्यस्रभेदः स प्रस्तारे यथाक्षरः २३
ऽऽऽ इति यथाक्षरोद्धट्टः

संपकेष्टाकोऽपि भेदः षट्पितापुत्रकस्य सः
तद्वद्यथात्तरः कार्यः प्लुताद्यन्त्यात्तरस्तथा २४
ऽेऽऽऽऽे इति यथात्तरः संपक्वेष्टाकः
एतौ स्वयोनिवत्स्यातां द्विकलौ च चतुष्कलौ २५
ऽऽऽऽऽऽ इति द्विकलोद्घट्टः ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति चतुष्कलोद्घट्टः
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ इति द्विकलः संपक्वेष्टाकः ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति चतुष्कालः संपक्वेष्टाकः ।
अन्यद्भेदत्रयं चाचपुटेऽप्यस्ति चतुष्कलात्
द्विगुणद्विगुणत्वेन षरणवत्यवधि क्रमात् २६
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इत्येको भेदः ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति द्वितीयो
भेदः ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ऽऽऽऽ
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ऽऽऽऽ ऽऽऽऽ इति तृतीयो भेदः ।
एषां पातकलायोगं श्रेयसे व्याहरामहे २७
आद्यवर्णैः पातकला निःशङ्कः पर्यभाषत
चच्चत्पुटे त्वेककले संशताशं यथाक्रमम् २८
ऽ ऽ । ऽे
सं श ता श ।
यद्वा शतांशता तालः शम्पा वा द्विर्भवेदिह
ऽ ऽ । ऽे ऽ ऽ । ऽे
श त श ता ताश ताश ।
आसारितादौ शम्पादिस्तालादिः पाणिकादिषु २९
इत्येककलचच्चत्पुटकलाविधिः
अन्त्यं भेदद्वयं चाचपुटेऽप्यस्ति मुनेर्मतम् ३०
ऽ । । ऽ ऽ । । ऽ
श त श ता । ताश ताश ।
इत्येककलचाचपुटकलाविधिः

उत्तरे संततस्तालः शतालौ द्विरनन्तरम् ३१
ऽे । ऽ ऽ । ऽ
स ता श ता श ता ।
इत्येककलषट्पितापुत्रककलाविधिः
निशौ निताशप्रनिसं द्विकले युग्मके मताः ३२
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निता शप्र निसं ।
इति द्विकल चच्चत्पुटकलाविधिः
निशौ ताशौ निसमिति ज्ञेयाश्चाचपुटे क्रमात् ३३
ऽ ऽ ऽ ऽ ऽ ऽ
निश ताश निसं ।
इति द्विकलचाचपुटकलाविधिः
निप्रताशनितानिशताप्रनिसं तथोत्तरे ३४
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निप्र ताश निता निश ताप्र निसं ।
इति द्विकलषट्पितापुत्र क कलाविधिः
आदावधिक आवापे क्षिप्ते विक्षेपकेऽन्तरा
द्विकले पादभागः स्यात्पादभागश्चतुष्कले ३५
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विश आनिविता आशविप्र आनिविसं ।
इति चतुष्कलचच्चत्पुटकलाविधिः
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विप्र आताविशं आनिविता आनिविशं आताविप्र आनिविसं
॥
इति चतुष्कलषट्पितापुत्रककलाविधिः ।
प्रथमे पादभागे स्यात्कलाऽङ्गुल्या कनिष्ठया
तथा चानामयाऽन्यत्र ताभ्यां मध्यमया तथा
तृतीये स्याच्चतसृभिस्तुर्ये चच्चत्पुटस्य तु ३६
ओजस्य पादभागेषु कला मध्याङ्गुलीं विना ३७

पञ्चपाणेः कनिष्ठादिचतुष्केण कनिष्ठया
तर्जन्या च पृथक्पादभागषङ्के क्रमात्कलाः ३८
आवापादिः प्रयोक्तव्यो भाविपातस्य पाणिना ३९
पातयुक्ते पादभागे नाङ्गुल्या क्रियते कला
उद्धट्टे तु सनिष्क्रामं शम्पाद्वंद्वं च योजयेत् ४०
ऽ ऽ ऽ
नि श श ।
इत्येककलोद्धट्टकलाविधिः
संपक्वेष्टाकस्य कलाः षट्पितापुत्रकोदिताः
संनिपातस्तु नास्त्यत्र योनिवद्द्विकलादिके
ऽे ऽ ऽ ऽ ऽे
ता श ता श ता ।
इत्येककलसंपक्वेष्टाककलाविधिः
भेदद्वयस्योद्धट्टाख्यतालस्य च कलाविधिः ४१
ऽ ऽ ऽ ऽ ऽ ऽ
निश ताश निसं ।
इति द्विकलोद्धट्टकलाविधिः
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विश आता विश आनि विस ।
इति चतुष्कलोद्धट्टकलाविधिः
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निप्र ताश निता निश ताप्र निसं ।
इति द्विकलसंपक्वेष्टाककलाविधिः ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विप्र आताविश आनिविता आनिविश आताविप्र आनि
विसं ।
इति चतुष्कलसंपक्वेष्टाककलाविधिः ।
गान्धर्वमार्गकुशलः कांस्यतालधरोऽपरः
गातुः सहायः कर्तव्यः प्रमादविनिवृत्तये ४२

युग्मस्य ये त्रयो भेदाः षड्वाऽयुग्मस्य कीर्तिताः
तेषामन्योन्यसंसर्गात्संकीर्णा बहवो मताः ४३
अन्ये पञ्चैव संकीर्णान्गान्धर्वेऽभिदधुर्बुधाः
पञ्च सप्त नवापि स्युर्दशैकादश तत्कलाः ४४
तालाश्चत्वार इत्यन्ये चतुर्दशकलादिकाः
चच्चत्पुटादिभेदास्तु सन्ति खण्डाभिधाः परे ४५
देशीतालप्रपञ्चेन तानपि व्याहरामहे ४६
आवृत्तिः पादभागादेः परिवर्तनमिष्यते
विश्रान्तियुक्तया काले क्रियया मानमिष्यते ४७
क्रियानन्तरविश्रान्तिर्लयः स त्रिविधो मतः
द्रुतो मध्यो विलम्बश्च द्रुतः शीघ्रतमो मतः
द्विगुणद्विगुणौ ज्ञेयौ तस्मान्मध्यविलम्बितौ ४८
मार्गभेदाच्चिरत्क्षिप्रमध्यभावैरनेकधा
लयोऽक्षरे पदे वाक्ये योऽसौ नात्रोपयुज्यते ४९
लयप्रवृत्तिनियमो यतिरित्यभिधीयते
समा स्रोतोगता चान्या गोपुच्छा त्रिविधेति सा ५०
आदिमध्यावसानेषु लयैकत्वे समा त्रिधा
लयत्रैध्यादादिमध्यावसानेषु यथाक्रमात् ५१
चिरमध्यद्रुतलया तदा स्रोतोगता मता
अन्या विलम्बमध्याभ्यां मध्यद्रुतवती परा ५२
द्रुतमध्यविलम्बैः स्याद्गोपुच्छा द्रुतमध्यभाक्
द्वितीयाऽन्या भवेन्मध्यविलम्बितलयान्विता ५३
समोऽतीतोऽनागतश्च ग्रहस्ताले त्रिधा मतः
गीतादिसमकालस्तु समपाणिः समग्रहः ५४
सोऽवपाणिरतीतः स्याद्यो गीतादौ प्रवर्तते
अनागतः प्राक्प्रवृत्तः स एवोपरिपाणिकः ५५
लयाः क्रमात्समादौ स्युर्मध्यद्रुतविलम्बिताः ५६
इति मार्गतालप्रकरणम्
एतैः प्रकरणाख्यानि तालैर्यानि जगुर्बुधाः

तानि गीतानि बद्दयामस्तेषामाद्यं तु मद्रकम् ५७
अपरान्तकमुल्लोप्यं प्रकर्यो वेणकं तथा
रोविन्दकोत्तरे सप्त गीतकानीत्यवादिषुः ५८
छन्दकासारिते वर्धमानकं पाणिका तथा
ऋचो गाथाश्च सामानि गीतानीति चतुर्दश ५९
शिवस्तुतौ प्रयोज्यानि मोद्गाय विदधौ विधिः
कुलकं छेद्यकं चेति तानि द्वेधाऽभ्यधुर्बुधाः ६०
वस्तूनामेकवाक्यत्वे कुलकं संप्रचद्गते
वस्तूनां भिन्नवाक्यत्वे छेद्यकं ते पुनः पृथक्
निर्युक्तं पदनिर्युक्तमनिर्युक्तमिति त्रिधा ६१
सर्वाङ्गयुक्तं निर्युक्तं पदनिर्युक्तकं पुनः
बद्धं स्तुतिपदैस्त्यक्तोपोहनप्रत्युपोहनम् ६२
वस्तुमात्रैरनिर्युक्तं तत्र त्रेधा तु मद्रकम्
विधिनैककलाद्येन चतुर्वस्तु त्रिवस्त्विति
पुनर्द्वेधा शीर्षकं तु त्रिवस्तुन्येव बोध्यते ६३
गुरूरायष्टौ लघून्यष्टौ वस्त्वेककलमद्रके
स्वरागयोनिजातेस्तु न्यासेऽपन्यासनेऽथवा
सन्यासेंऽशेऽथवा न्यासः सर्वगीतस्थवस्तुनः ६४
ध्रुवपातमपातं वा तद्गुरुत्रयमादिमम्
शद्वयं ताद्वयं शम्पे तालौ च द्विः शतौ च सम् ६५
क्रमाद्गलेषु शेषेषु तस्य स्यात्पातकल्पना
एवं वस्तुत्रयं गीत्वा शीर्षकं तु प्रयुज्यते ६६
चतुष्कलेनैककलेनाथवा पञ्चपाणिना
आद्ये वस्तुनि कर्तव्यं गुरुद्वयमुपोहनम्
गुरुणाऽगुरुणा कार्यं शेषयोः प्रत्युपोहनम् ६७
भरण्टुमाद्याद्दरैरेव रचना स्यात्तयोर्द्वयोः ६८
एकवस्तुकमप्याहुर्मद्रकं वेऽपि सूरयः
तृतीये गुरुणि प्रोक्तं तत्र तैः प्रत्युपोहनम् ६९
गुर्वष्टके स्याद्विविधो लघुष्वष्टस्तथैककम्

विविधो द्विविदारीकः स त्रिधा परिकीर्तितः ७०
सामुद्गश्चार्धसामुद्गो विवृत्तश्चेति सूरिभिः
विदार्योः पदवर्णादिसाम्यात्सामुद्गको मतः ७१
विदारीभागयोः साम्यात्त्वर्धसामुद्गको मतः
पूर्वस्या वा परस्या वा द्वयोर्वेति त्रिधा च सः ७२
न्यासान्तो विविधः कार्यः सर्वो द्वे गेयकं विना
असमानविदारीको न्यासापन्याससनिर्मितः ७३
विवृत्तः स्याद्विदारी तु गीतखण्डं द्विधा च सा
महत्यवान्तरा चेति महती व्याप्तवस्तुका
समाप्ता पदवर्णान्तेऽवान्तरा त्वन्तराभवा ७४
अनयोर्वस्तुवन्न्यासो जात्यंशोऽशोऽल्पके पुनः
अंशे तदनुवादी वा संवादी वांऽश इष्यते ७५
संख्यानियममेतासां नावोचन्दन्तिलादयः
भगवान्भरतस्तासां संख्यानियममभ्यधात् ७६
अवरैकादशपरा विदार्यः परिकीर्तिताः
चतुर्विंशतिरासां तु प्रमाणं परमं स्मृतम् ७७
अवान्तरविदारीणां चतुर्विंशतिसंख्यया
न्यासान्तमथवांऽशान्तं विदार्येकैककं मतम् ७८
आद्यं वस्तुद्वयं मद्रांशग्रहं मे मतम् ७९
अस्य प्रस्तारः
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । । । । । ।
उ उ उ श श ता श श श ता ता श ता श ता सं
एवं वस्तुत्रयं वस्तुचतुष्टयं वा । वस्तु त्रयान्ते शीर्षकं चतुष्कलेन
पञ्चपाणिना यथाक्षरेण वा ॥
अथैककला--
ऽ । ऽ ऽ । ऽ
सं ता श ता श ता इत्येककला
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आ नि वि प्र आ ता वि श आ नि वि ता

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आ नि वि श आ ता वि प्र आ नि वि सं
इति शीर्षकम्
इत्येककलमद्रकम्
द्विकले मद्रके वस्तु स्याच्चतुर्विंशतिः कला ८०
पादभागा द्वादश स्युस्तैस्तु मात्रात्रयं भवेत्
द्विकलेनोत्तरेण स्याच्छीर्षं वस्तुत्रयात्परम् ८१
यथाक्षरेण वा तत्र त्रिकलं स्यादुपोहनम्
प्रत्युपोहनमत्र स्यात्कलिकं द्विकलं न वा ८२
विविधः ह्प्रतिवस्तु स्यान्मात्रयोरेककं पुनः
भवेत्तृतीयमात्रायामथ पातकलाविधिः ८३
पादभागत्रये निप्रौ पञ्चस्वन्येषु याः कलाः
आद्यास्तासु निरेवान्यत्पूर्वमद्रकवद्भवेत् ८४
अस्य प्रस्तारः
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
नि प्र नि प्र नि प्र नि श ॥ मात्रा १
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
नि श नि ता नि ता नि श ॥ मात्रा २
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
श ता ता श ता श ता सं ॥ मात्रा ३
ईदृग्वस्तुत्रयान्ते शीर्षकं यथाक्षरेण द्विकलेनोत्तरेण वा ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽे । ऽ ऽ । ऽे
निप्र ताश निता निश ताप्र निसं ॥ सं ता श ता श ता
॥
इति शीर्षकम्
इति द्विकलमद्रकम्
चतुष्कले तु द्विगुणं वस्तु द्विकलवस्तुनः
लक्ष्म द्विकलवत्किं तु पादभागश्चतुष्कलः ८५

चतुष्कलेनोत्तरेण केवलेनास्य शीर्षकम्
युक्तेनैककलाद्यैर्वाऽष्टकलं स्यादुपोहनम् ८६
विविधोऽन्तिमवस्त्वन्ते कार्यो द्वैगेयकाभिधः
असावंशादिरंशान्तपदावृत्तियुतो मतः ८७
आनिविप्राः पादभागत्रितयेऽभिमताः क्रमात्
द्वयोरानिविशास्तद्वद्द्वयोरानिवितास्ततः ८८
एकत्राऽऽनिविशा आशविताश्चाऽऽताविशा द्वयोः
अन्त्ये तानिविसं पातकलाविधिरयं मतः ८९
चच्चत्पुटवदङ्गुल्यः कर्तव्या मद्रके बुधैः ९०
अस्य प्रस्तारः-- ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र आनिविप आनिविश ॥
मात्रा १
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश आनिविता आनिविता आनिविश ॥ मात्रा २
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आशिविता आताविश आताविश तानिविसं ॥ मात्रा ३ इत्येकं वस्तु ।

एवं वस्तुत्रयानन्तरं शीर्षकं चतुष्कलेन पञ्चपाणिना यथा--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आताविश आनिविता आनिविश आताविप्र आनिविसं ॥
एककलचतुष्कलाभ्यां वा-- ऽे । ऽ ऽ । ऽे ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
सं ता श ता श ता ॥ आनिविप्र
आताविश
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविता आनिविश आताविप्र आनिविसं ॥
द्विकलचतुष्कलाभ्यां वा--ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निप्र ताश निता निश ताप्र निसं ॥

आनिविप्र
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
आताविश आनिविता आनिविश आताविप्र आनिविसं ॥
चतुष्कलाभ्यां वा ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ -
आ नि वि प्र आ ता वि श आ नि वि ता आ-
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽऽ ऽ ऽ ऽ ऽऽ ऽ ऽ ऽ ऽ
नि वि श आ ता वि प्र आ नि वि सं ॥ आ नि वि प्र आ ता वि श
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आ नि वि ता आ नि वि श आ नि वि प्र आ नि वि सं
इति शीर्षकम्
इति चतुष्कलमद्रकम्
त्रिधाऽपरान्तकं तद्वद्भेदेनैककलादिना
अस्मिन्नेककले वस्तु चतुर्गुरु चतुर्लघु ९१
पञ्च षट् सप्त वा वस्तून्यस्य शाखा निगद्यते
शाखेव प्रतिशाखा स्यात्किं त्वन्यपदनिर्मिता ९२
शाखार्धं पश्चिमं त्वाह प्रतिशाखां विशाखिलः ९३
शाखा वस्तूच्यते तस्याः परार्धं म्प्रतिशाखिका
इत्याह भरतस्तत्रोपोहनं कलिकं मतम् ९४
प्रत्युपोहनमत्र स्यान्न वाऽन्ये त्वेकवस्तुकम्
इदमाहुः कला तेषां द्वितीया प्रत्युपोहनम् ९५
शीर्षमेककलेन स्याच्छाखान्ते पञ्चपाणिना
अन्ये तु प्रतिशाखान्तेऽप्येतदाहुर्मनीषिणः ९६
शाखायाः प्रतिशाखायाः कलाषट्केऽन्त्यवस्तुनः
अन्त्ये पदावृत्तियुक्तः पञ्चपाणिर्यथाक्षरः ९७
निजपातैर्विना यद्वा तत्पाता एव केवलाः
तालिकेयं पृथग्यद्वा पञ्चपाणौ यथाक्षरे ९८
तृतीयादिगलेषु स्युः शताताशाश्च तालसम् ९९
प्रस्तारः--
ऽऽ ऽऽ। । । । इति वस्तु ऽे । ऽ ऽ । ऽे

उउ प्र शता ताश तासं । । सं ता श ता श ता
इति तालिका ॥ । । । । इति प्रतिशाखा । ऽे। ऽ ऽ । ऽे
ता श ता श । संता शता शता
।
इति शीर्षकम्
इत्येकवस्तुकम् ॥
इत्येकवस्तुकमपरान्तकम् ।
अथ पञ्चवस्तुकम् --
ऽ ऽ ऽ ऽ । । । ।
उ उ श ता ता श ता सं । वस्तु १
ऽ ऽ ऽ ऽ । । । ।
उ उ श ता ता श ता सं । वस्तु २
ऽ ऽ ऽ ऽ । । । ।
उ उ श ता ता श ता सं । वस्तु ३
ऽ ऽ ऽ ऽ । । । ।
उ उ श ता ता श ता सं । वस्तु ४
ऽ ऽ ऽ ऽ । । । ।
उ उ श ता ता श ता सं । वस्तु ५
ऽे । ऽ ऽ । ऽे
सं ता श ता श ता ।
इति शीर्षकम् । इयं शाखा । ईदृश्येव पदान्तरनिर्मिता प्रतिशाखा ।
इति पञ्चवस्तुकम्
अथ षड्वस्तुकम् ।
प्रस्तारः--
ऽ ऽ ऽ ऽ । । । ।
उ उ श ता ता श ता सं । वस्तु १
ऽ ऽ ऽ ऽ । । । ।
उ उ श ता ता श ता सं । वस्तु २
ऽ ऽ ऽ ऽ । । । ।

उ उ श ता ता श ता सं । वस्तु ३

ऽ ऽ ऽ ऽ । । । ।

उ उ श ता ता श ता सं । वस्तु ४

ऽ ऽ ऽ ऽ । । । ।

उ उ श ता ता श ता सं । वस्तु ५

ऽ ऽ ऽ ऽ । । । ।

उ उ श ता ता श ता सं । वस्तु ६

तालिका ॥

ऽे । ऽ ऽ । ऽे

सं ता श ता श ता ।

शीर्षकम् ।

ऽे । ऽ ऽ । ऽे

सं ता श ता श ता ।

ईदृश्येव पदान्तरनिर्मिता प्रतिशाखा ॥

इति षड्वस्तुकम्

अथ सप्तवस्तुकम्--

ऽऽ ऽऽ ।। ।।

उउ शता ताश तासं । वस्तु १

ऽऽ ऽऽ ।। ।।

उ उ शता ताश तासं । वस्तु २

ऽऽ ऽऽ ।। ।।

उ उ शता ताश तासं । वस्तु ३

ऽऽ ऽऽ ।। ।।

उ उ शता ताश तासं । वस्तु ४

ऽऽ ऽऽ ।। ।।

उ उ शता ताश तासं । वस्तु ५

ऽऽ ऽऽ ।। ।।

उ उ शता ताश तासं । वस्तु ६

ऽऽ ऽऽ ।। ।।

उ उ  शता   ताश तासं । वस्तु ७
ऽ। ऽऽ ।ऽ
संता शता शता ।
इति तालिका ॥
ऽ। ऽऽ ।ऽ
संता शता शता ।
इति शीर्षकम् ॥
इति सप्तवस्तुकम् ।
सर्वेषां वस्तूनां शाखात्वे तदुत्तरार्धानां प्रतिशाखात्वे ताशताशा ।
ईदृश्येव प्रतिशाखा--प्रतिशाखापक्षे त्वेवम्--शाखा १
ऽऽ ऽऽ   ।। ।।
उउ शता   ताश तासं ।
शीर्षकम् ॥
ऽ। ऽऽ ।ऽ   ऽ। ऽऽ ऽऽ
संता शता शता   संता शता शता   प्रतिशाखा ॥
। । । ।
ताश ताश
तालिका ॥
ऽ। ऽऽ ।ऽ
संता शता शता ।
शीर्षकम् ॥
ऽ। ऽऽ ।ऽ
संता शता शता ।
शाखा २
ऽऽ ऽऽ   ।। ।।
उउ शता   ताश तासं ।
शीर्षकम् ॥
ऽ। ऽऽ ।ऽ
संता शता शता ।

तालिका ॥
ऽे। ऽऽ ।ऽे
संता शता शता ।
प्रतिशाखा ॥
। । । ।
ताश ताश
शीर्षकम् ॥
ऽे। ऽऽ ।ऽे
संता शता शता ।
तालिका
ऽे। ऽऽ ।ऽे
संता शता शता ।
शाखा ३
ऽऽ ऽऽ ।। ।।
उउ शता ताश तासं ।
शीर्षकम् ३
ऽे। ऽऽ ।ऽे
संता शता शता ।
शाखा ४
ऽऽ ऽऽ ।। ।।
उउ शता ताश तासं ।
शीर्षकम् ४
ऽे। ऽऽ ।ऽे
संता शता शता ।
तालिका ४
ऽे। ऽऽ ।ऽे
संता शता शता ।
प्रतिशाखा ४
। । । ।

ताश ताश
शीर्षकम् ४
ऽ। ऽऽ ।ऽ
संता शता शता ।
तालिका ॥
ऽ। ऽऽ ।ऽ
संता शता शता ।
शाखा ५
ऽऽ ऽऽ ।। ।।
उउ शता ताश तासं ।
शीर्षकम् ५
ऽ। ऽऽ ।ऽ
संता शता शता ।
तालिका ५
ऽ। ऽऽ ।ऽ
संता शता शता ।
प्रतिशाखा ५
। । । ।
ताश ताश
शीर्षकम् ५
ऽ। ऽऽ ।ऽ
संता शता शता ।
तालिका ५
ऽ। ऽऽ ।ऽ
संता शता शता ।
एवं षड्वस्तुकसप्तवस्तुकयोरप्यूहनीयम् । शाखोत्तरार्धस्य
प्रतिशाखात्वपक्षे तु पञ्चवस्तुकम् ।
यथा--
ऽऽ ऽऽ ।। ।।

उउ शता ताश तासं । वस्तु १
ऽऽ ऽऽ । । । ।
उउ शता ताश तासं । वस्तु २
ऽऽ ऽऽ । । । ।
उउ शता ताश तासं । वस्तु ३
ऽऽ ऽऽ । । । ।
उउ शता ताश तासं । वस्तु ४
ऽऽ ऽऽ । । । ।
उउ शता ताश तासं । वस्तु ५
ऽऽ ऽऽ । । । ।
उउ शता ताश तासं ।
इति शाखा । तालिका
ऽे । ऽ ऽ । ऽे
संता शता शता ।
शीर्षकम्
ऽे । ऽ ऽ । ऽे
संता शता शता ।
इति पञ्च वस्तुकम् ।
षड्वस्तुके शाखां शीर्षकं च लिखित्वा तदर्धेन वस्तुत्रयेण प्रतिशाखां
लिखित्वा तालिकां शीर्षकं पूर्ववल्लिखेत् । एवं सप्तवस्तुके
सप्तवस्तुकां शाखां तालिकां शीर्षकं च लिखित्वा तदर्धेन
सार्धवस्तुत्रयेण प्रतिशाखां च लिखेत् ।म्
ततस्तालिकां शीर्षकं च पूर्ववल्लिखेत् ॥
इत्येककलमपरान्तकम् ।
द्विकले द्वादशकलं वस्तु स्यादपरान्तके
तच्चैककलवत्कार्यं विशेषस्त्वभिधीयते ९९
उपोहनं स्यात्कलिकं द्विकलं वा कलैव तु
प्रत्युपोहनमत्रोपवर्तनं तुर्यवस्तुनि १००
गीते तत्पदगीतिभ्यां तल्लयार्धलयं भवेत्

यथाक्षरेणोत्तरेण वृत्तिदक्षिणमार्गयोः १०१
समाप्तार्थन्यासयुक्तं केचित्पञ्चमवस्तुनः
एतदाद्ये कलाषट्के गातव्यमिति मन्वते १०२
निप्रनिप्रा निशनितास्ताशास्तासं कला त्विह
एककं विविधं वाऽत्र गीताङ्गं दन्तिलोऽवदत्
गीताङ्गनियमं कंचिन्नाब्रूत भगवान्मुनिः १०३
वस्तु १
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥
प्रतिशाखा ॥
ऽऽ ऽऽ ऽऽ
निता ताश तासं ॥
शीर्षकम् ॥
ऽ। ऽऽ ।ऽ
संता शता शता ।
तालिका ॥
ऽ। ऽऽ ।ऽ
संता शता शता ।
प्रतिशाखा ॥
ऽऽ ऽऽ ऽऽ
निता ताश तासं ॥
शीर्षकम् ॥
ऽ। ऽऽ ।ऽ
संता शता शता ॥
तालिका
ऽ। ऽऽ ।ऽ
संता शता शता ॥ प्रतिशाखा ॥
। । । ।
ताश ताश ॥

तालिका ॥
ऽे। ऽऽ । ऽे
संता शता शता
शीर्षकम् ॥
ऽे। ऽऽ । ऽे
संता शता शता ॥
इत्येकं वस्तु ॥
अथ पञ्चवस्तुकम्--
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥ १
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥ २
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥ ३
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥ ४
ऽे। ऽऽ । ऽे
संता शता शता ॥
इत्युपवर्तनम् ॥
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥ ५
तालिका ॥
ऽे। ऽऽ । ऽे
संता शता शता ॥
शीर्षकम् ॥
ऽे। ऽऽ । ऽे
संता शता शता ॥
एवं पदान्तरनिर्मिता प्रतिशाखा । एवं षड्वस्तुकं सप्तवस्तुकं च ।
इयमेव शाखा । शाखोत्तरार्धस्य प्रतिशाखात्वे प्रतिशाखा यथा ।

वस्तुनोऽर्धम् । वस्तु १
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ।
वस्तु २
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥
वस्तु २
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ।
वस्तु ३
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥
वस्तु ४
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥
ऽे। ऽऽ । ऽे
संता शता शता ॥
इत्युपवर्तनम् । वस्तु ५
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ।
ऽऽ ऽऽ ऽऽ
निता ताश तासं ॥
प्रतिशाखा । तालिका ॥
ऽे। ऽऽ । ऽे
संता शता शता ॥
शीर्षकम् ।
ऽे। ऽऽ । ऽे
संता शता शता ।
इति पञ्चवस्तुकम् ।

एवं षड्वस्तुसप्तवस्तुके शाखां चतुर्थशाखान्त उपवर्तनं शाखान्ते पूर्ववत्तालिकां शीर्षकं च लिखित्वा वस्तुत्रयात्मकं शाखार्धरूपं प्रतिशाखितुर्यवस्त्वन्त उपवर्तनं तालिकां शीर्षकं च लिखेत् । एवमेव सप्तवस्तुत्रयात्मकं शाखार्धरूपां प्रतिशाखां तुर्यवस्त्वन्त उपवर्तनयुक्तां तालिकां शीर्षकं च लिखित्वा सार्धवस्तुत्रयात्मिकां तुर्यवस्त्वन्तोपवर्तनयुक्तां प्रतिशाखां तालिकां च शीर्षकं च लिखेत् । सर्ववस्तूनां प्रतिवस्तु शाखात्वपक्षे तत्तदर्धानां प्रतिशाखात्वे प्रस्तारः--

शाखा

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ

निप्र निप्र निश निता ताश तासं ॥

१ तालिका

ऽे। ऽऽ । ऽे

संता शता शता

१ शीर्षकम्

ऽे। ऽऽ । ऽे

संता शता शता

१ प्रतिशाखा

ऽऽ ऽऽ ऽऽ

निता ताश तासं

१ तालिका

ऽे। ऽऽ । ऽे

संता शता शता

१ शीर्षकम्

ऽे। ऽऽ । ऽे

संता शता शता

१ शाखा

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ

निप्र निप्र निश निता ताश तासं ॥

२ तालिका

ऽे। ऽऽ । ऽे
संता शता शता
२ शीर्षकम्
ऽे। ऽऽ । ऽे
संता शता शता
२ वस्तु
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥
३ तालिका
ऽे। ऽऽ । ऽे
संता शता शता
३ शीर्षकम्
ऽे। ऽऽ । ऽे
संता शता शता
३ प्रतिशाखा
ऽे। ऽऽ । ऽे
संता शता शता
३ तालिका
ऽे। ऽऽ । ऽे
संता शता शता
३ प्रतिशाखा
ऽे। ऽऽ । ऽे
संता शता शता
३ तालिका
ऽे। ऽऽ । ऽे
संता शता शता
३ शीर्षकम्
ऽे। ऽऽ । ऽे
संता शता शता

३ शाखा ४
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ।
तालिका ४
ऽे। ऽऽ । ऽे
संता शता शता
शीर्षकम् ४
ऽे। ऽऽ । ऽे
संता शता शता
प्रतिशाखा ४
ऽऽ ऽऽ ऽऽ
निता ताश तासं ।
तालिका ४
ऽे। ऽऽ । ऽे
संता शता शता
शीर्षकम् ४
ऽे। ऽऽ । ऽे
संता शता शता ।
उपवर्तनम् ४
ऽे। ऽऽ । ऽे
संता शता शता
शाखा ५
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ।
तालिका ५
ऽे। ऽऽ । ऽे
संता शता शता
शीर्षकम् ५
ऽे। ऽऽ । ऽे

संता शता शता ।
प्रतिशाखा ५
ऽ ऽ ऽ ऽ ऽ ऽ
निता ताश तासं ।
तालिका ५
ऽे । ऽ ऽ । ऽे
संता शता शता ।
शीर्षकम् ५
ऽे । ऽ ऽ । ऽे
संता शता शता ।
इति पञ्चवस्तुकम् । एवमेव षड्वस्तुकम् ॥
इति द्विकलमपरान्तकम्
चतुष्कलं तु द्विगुणं द्विकलात्पूर्ववन्मतम्
उपोहनं तु वस्त्वर्धं द्विकलं प्रत्युपोहनम् १०४
दक्षिणे वार्तिके त्वेतद्द्विकलं वा चतुष्कलम्
न वा तत्सर्वमार्गेषु विशेषस्तूपवर्तनम्
तुर्यवस्तूत्तरार्धस्थैः पदैर्निर्माणमिष्यते १०५
आनिविप्रा आनिविप्रा आवापनिविशास्ततः १०६
आवापनिविता आताविशास्तानिविसं कलाः
शतालप्रान्प्राहुरन्येऽष्टमद्वादशषोडशान् १०७
अस्य प्रस्तारः--वस्तु--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विप्र आनि विप्र आनि विश आनि विता ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आता विश आनि विसं ॥
तलिका ॥
ऽे । ऽ ऽ । ऽे
संता शता शता ॥
शीर्षकम् १

ऽ। ऽऽ । ऽ
संता शता शता ॥ प्रतिशाखा १
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ग्रानिविता ग्राताविश तानिविसं ॥
तालिका १
ऽ। ऽऽ । ऽ
संता शता शता ॥
शीर्षकम् १
ऽ। ऽऽ । ऽ
संता शता शता ॥
एकं वस्त्विति ॥
ग्रथ पञ्चवस्तुकं यथा--वस्तु शाखा १
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
ग्रानि विप्र ग्रानि विप्र ग्रानि विश ग्रानि विता
ऽऽऽऽ ऽऽऽऽ
ग्राताविश तानिविसं ॥
वस्तु २
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ग्रानिविप्र ग्रानिविप्र ग्रानिविश ग्रानिविता
ऽऽऽऽ ऽऽऽऽ
ग्राताविश तानिविसं ॥
वस्तु ३
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ग्रानिविप्र ग्रानिविप्र ग्रानिविश ग्रानिविता
ऽऽऽऽ ऽऽऽऽ
ग्राताविश तानिविसं ॥
वस्तु ४
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ग्रानिविप्र ग्रानिविप्र ग्रानिविश ग्रानिविता

ऽ ऽ ऽ ऽ   ऽ ऽ ऽ ऽ
आताविश  तानिविसं ॥
उपवर्तनम्
ऽे। ऽ ऽ । ऽे
संता शता शता ॥
वस्तु ५
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र आनिविश आनिविश
ऽ ऽ ऽ ऽ
तानिविसं ॥
तालिका
ऽे। ऽ ऽ । ऽे
संता शता शता ॥
शीर्षकम्
ऽे। ऽ ऽ । ऽे
संता शता शता ॥
एवमुपवर्तनतालिकाशीर्षकसहितपञ्चवस्तुका शाखा । तत एवमेव प्रतिशाखा । शाखापश्चिमार्ध प्रतिशाखात्वे तु पञ्चवस्तुकं यथा--
प्रस्तारः--वस्तु १
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र आनिविश आनिविता
ऽ ऽ ऽ ऽ   ऽ ऽ ऽ ऽ
आताविश  तानिविसं ॥
वस्तु २
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र आनिविश आनिविता
ऽ ऽ ऽ ऽ   ऽ ऽ ऽ ऽ
आताविश  तानिविसं ॥
वस्तु ३

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
स्रानिविप्र स्रानिविप्र स्रानिविश स्रानिविता
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
स्राताविश तानिविसं ॥
वस्तु ४
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
स्रानिविप्र स्रानिविप्र स्रानिविश स्रानिविता
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
स्राताविश तानिविसं ॥
उपवर्तनम्
ऽे। ऽ ऽ । ऽे
संता शता शता ॥
वस्तु ५
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
स्रानिविप्र स्रानिविप्र स्रानिविश स्रानिविता
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
स्राताविश तानिविसं ॥
तालिका ॥
ऽे। ऽ ऽ । ऽे
संता शता शता ॥
शीर्षकम्
ऽे। ऽ ऽ । ऽे
संता शता शता ॥
इति पञ्चवस्तुकम् ॥
एवं षड्वस्तु सप्तवस्तुकं च । शाखोत्तरार्धस्य प्रतिशाखापद्मत्वे तु पद्मद्वयं प्रतिशाखा । यथा--पञ्चवस्तुके पूर्ववत्पञ्चवस्तुकां शाखां लिखित्वा शाखोत्तरार्धरूपा सार्धवस्तुद्वयात्मिका प्रतिशाखायाः शाखा तृतीयवस्तूत्तरार्धादिसार्धवस्तु ॥
प्रस्तारः--वस्तु १

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र आनिविश आनिविता
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आताविश तानिविसं ॥
एवं वस्तुचतुष्टयम् । उपवर्तनम् ॥
ऽे। ऽ ऽ । ऽे
संता शता शता ॥
वस्तु ५
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र आनिविश आनिविता
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश तानिविसं ॥
प्रतिशाखेयम् । तालिका ॥
ऽे। ऽ ऽ । ऽे
संता शता शता ॥
शीर्षकम् ॥
ऽे। ऽ ऽ । ऽे
संता शता शता ॥
एवं षड्वस्तु सप्तवस्तुकमपि ज्ञेयम् ।
सर्ववस्तूनां प्रतिशाखात्वपक्षे तदुत्तरार्धानां प्रतिशाखात्वे प्रस्तारः--
शाखा १
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र आनिविश आनिविता
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश तानिविसं ॥
शीर्षकम्
ऽे। ऽ ऽ । ऽे
संता शता शता ॥
तालिका १

ऽे। ऽऽ । ऽे
संता शता शता ॥
प्रतिशाखा १
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ञ्रानिविता ञ्रानिविश तानिविसं ।
तालिका १
ऽे। ऽऽ । ऽे
संता शता शता ॥
शीर्षकम्
ऽे। ऽऽ । ऽे
संता शता शता ॥
शाखा २
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ञ्रानिविप्र ञ्रानिविप्र ञ्रानिविश ञ्रानिविता
ऽऽऽऽ ऽऽऽऽ
ञ्रानिविश तानिविसं ॥
शीर्षकम् २
ऽे। ऽऽ । ऽे
संता शता शता ॥
तालिका २
ऽे। ऽऽ । ऽे
संता शता शता ॥
प्रतिशाखा २
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ञ्रानिविता ञ्रानिविश तानिविसं ॥
तालिका २
ऽे। ऽऽ । ऽे
संता शता शता ॥
शीर्षकम् २

ऽे। ऽऽ ।ऽे
संता शता शता ॥
शाखा ३
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ग्रानिविप्र ग्रानिविप्र ग्रानिविश ग्रानिविता
ऽऽऽऽ ऽऽऽऽ
ग्रानिविश तानिविसं ॥
शीर्षकम् ३
ऽे। ऽऽ ।ऽे
संता शता शता ॥
तालिका ३
ऽे। ऽऽ ।ऽे
संता शता शता ॥
प्रतिशाखा ३
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ानिविता ग्रानिविश तानिविसं ॥
तालिका ३
ऽे। ऽऽ ।ऽे
संता शता शता ॥
शीर्षकम् ३
ऽे। ऽऽ ।ऽे
संता शता शता ॥
शाखा ४
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ग्रानिविप्र ग्रानिविप्र ग्रानिविश ग्रानिविता
ऽऽऽऽ
तानिविसं ॥
शीर्षकम् ४
ऽे। ऽऽ ।ऽे
संता शता शता ॥

तालिका ४
ऽ। ऽऽ । ऽ
संता शता शता ॥
प्रतिशाखा ४
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ग्रानिविता ग्रानिविश तानिविसं ॥
तालिका ४
ऽ। ऽऽ । ऽ
संता शता शता ॥
शीर्षकम् ४
ऽ। ऽऽ । ऽ
संता शता शता ॥
शाखा ५
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ग्रानिविप्र ग्रानिविप्र ग्रानिविश ग्रानिविता
ऽऽऽऽ ऽऽऽऽ
ग्रानिविश तानिविसं ॥
शीर्षकम् ५
ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
ग्रानिविता ग्रानिविश तानिविसं ॥
तालिका ५
ऽ। ऽऽ । ऽ
संता शता शता ॥
शीर्षकम् ५
ऽ। ऽऽ । ऽ
संता शता शता ॥
एवं पञ्चवस्तुकभेदाः ।
एवं षड्वस्तु सप्तवस्तुकम्
इति चतुष्कलमपरान्तकम् ।

भेदैरेककलाद्यैः स्यादुल्लोप्यकमपि त्रिधा  १०८
भवेदेककले तस्मिन्गुरुद्वंद्वं लघुद्वयम्
गुर्वन्ते चेति मात्रैका तच्च मात्रासमाप्तिकम्  १०९
द्विकलेऽष्टकला मात्रा द्विगुणा तु चतुष्कले
मात्रापूर्वदले कार्यो विविधो मुखसंज्ञकः
पश्चिमार्धे प्रतिमुखं विविधो वृत्तसंयुतः  ११०
वृत्तं तिस्रश्चतस्रो वा पञ्च षड्वा विदारिकाः
अवगाढं प्रवृत्तम् च तद्द्विधेति निरूपितम्
आद्यमारोहिवर्णेन प्रवृत्तमवरोहिणा  १११
न्यासापन्याससंन्यासविन्यासानां तु कुत्रचित्
न्यासोऽस्यांशेऽस्य संवादिन्यनुवादिनि वा भवेत्  ११२
अनन्तरस्वरैरेकान्तरितैर्वा समापनम्
विदारीणां भवेदत्रेत्यभ्यधत्त विशाखिलः  ११३
अन्यत्रा समपन्यासमंश संवादिनं तथा
उपक्रम्य चतुर्धा स्यादारोहो वाऽवरोहणम्  ११४
वैहायसं विधातव्यं मात्रोपरि चतुष्कले
यद्वा कलाप्रयोगेण शून्यान्मात्रोपरिस्थितात्  ११५
कलाचतुष्ककालात्स्यादेककत्रितयादिदम्
एकाङ्गादिषडङ्गान्तं द्वादशाङ्गान्तमप्यदः
विविधोऽस्याऽऽद्यमङ्गं स्यादेककानि ततः परम्  ११६
तद्द्वादशकलं प्रोक्तमुल्लोप्यकसमापकम्
वर्णानुकर्षणं तालावृत्तिर्वाऽङ्गनिवेशने  ११७
यद्वा शाखेयमुदिता मात्रा वैहायसात्मिका  ११८
शाखैव प्रतिशाख्कोक्ता सा त्वन्यपदनिर्मिता
ततोऽन्ताहरणं प्रोक्तं पञ्चपाणौ यथाक्षरे  ११९
एतत्संहरणं प्रोक्तम् गीतकस्य समाप्तिकृत्
वृत्तं संहरणेऽत्र स्यादन्यदा त्वेककं भवेत्  १२०
विविधो वा त्रिधाऽन्तोऽथ युगयुङ्मप्रभेदतः
युग्मोऽन्तः प्रथमस्तेषां त्र्यस्र इत्याह दन्तिलः  १२१

स्थितं प्रवृत्तमपरं महाजनिकमित्यपि
त्रीरायङ्गानि पृथक्तेषां लक्षणं प्रतिपाद्यते १२२
युग्मे द्विकलयुग्मेन स्थितं स्थायिगतं मतम्
तेनैव तत्प्रवृत्तं स्यादुद्धट्टस्तत्कलात्रये १२३
आद्ये कलाचतुष्केऽन्त्ये पदानि प्राञ्चि योजयेत्
विविधोऽस्याऽऽद्यभागे स्यादेककं तु ततः परम् १२४
पूर्वार्धस्थपदावृत्त्या युङ्महाजनिकं विदुः
स्थितततालयुतं तस्य गीताङ्गनियमो न वा १२५
त्र्यस्रेऽन्ते त्र्यस्रतालेन द्विकलेन स्थितं भवेत्
यथाक्षरेणोत्तरेण प्रवृत्तं तत्र कीर्तितम्
त्र्यस्रेण महाजनिकं महाजनिकवन्मतम् १२६
मिश्रान्तः षड्विधः प्रोक्तो युग्मायुग्माङ्गमिश्रणात्
एककं विविधो वा स्यादनुक्ताङ्गस्थितादिषु १२७
विविधाभ्यां चैककाभ्यां यद्वा युग्मस्थितं भवेत्
अयुगन्यतराङ्गं स्यात्प्रवृत्तस्थितवन्मतम् १२८
प्रवृत्ताभ्यां प्रवृत्तेन युगयुग्मं परेऽब्रुवन्
महाजनिकमन्त्यं स्याद्द्व्यङ्गमेकाङ्गकं परम् १२९
द्व्यङ्गो यदा तदाऽन्तः स्यान्महाजनिकवर्जितः
स्थितप्रवृत्तहीनोऽयं यदैकाङ्गश्चिकीर्षितः १३०
शताशतासमित्येककल उल्लोप्यके कलाः
द्विकले स्युर्निशनिता शतानिसमिति क्रमात् १३१
चतुष्ले त्वानिविशास्तत आनिविताः क्रमात्
भवन्त्याशविता आनिविसं मात्रां गताः कलाः १३२
वैहायसे तु विनिशानिवितानि शताशताः
संनिपातश्चेति कलाः स्थिते निः पञ्चमो भवेत् १३३
शताशतासंनिपाताः प्रवृत्ते त्रिकलादनु
त्र्यस्रस्थिते चतुर्थः प्र इत्युल्लोप्ये कलाविधिः १३४
वैयाहसादिनिर्मुक्तमथवा स्याच्चतुष्कलम् १३५
अन्तान्तमन्ताहरणप्रान्तं वैहायसान्तिमम्

मात्रामात्रमिति प्रोक्तं तच्चतुर्धा पुरातनैः १३६

प्रस्तारः--

ऽ ऽ ऽ ऽ ऽ

शता शता सं

इत्येककलोल्लोप्यकमात्रा ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

निश निता शता निसं ।

इति द्विकलमात्रा ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

ग्रानि विश ग्रानि विता ग्राशाविता ग्रानि विसं ।

इति चतुष्कलमात्रा ।

इति मात्रामात्रमुल्लोप्यकम् ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

ग्रानि विश ग्रानि विता ग्राश विता ग्रानि विसं ।

वैहायसा चतुष्कलमुल्लोप्यकम् ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

ग्रानि विश ग्रानि विता ग्राश विता ग्रानि विसं ।

चतुर्मात्रामात्रप्रयोगशून्यचतुष्कला ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

ग्रानि विश ग्रानि विता ग्राश विता ग्रानि विसं ।

चतुष्कलान्तमुल्लोप्यकम् ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

नि वि श नि वि ता वि श ता श ता सं ।

मात्रा १

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

ग्रानिविश ग्रानिविता ग्राशविता ग्रानिविसं ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

निविश निविता निशता शतासं ।

इत्युल्लोप्यककला प्रयोगः । शून्यकलाचतुष्कलानन्तरवैहायसरूपम्

। चतुष्कला मात्रा ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश आनिविता आशविता आनिविसं ।
शाखा ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविश निविता निशता शतासं ।
एवमेव पदान्तरानिर्मिता प्रतिशाखा । ततः संहरणाख्यमन्ताहरणम् ॥
इत्यन्ताहरणान्तमुल्लोप्यकम् ।
अथ युग्मस्यान्तस्यायुग्मस्य च त्रयो भेदाः स्थितं प्रवृत्तं महाजनिकं चेति
।
तत्र युग्मस्थितान्तमुल्लोप्यकं यथा--
ऽे। ऽ ऽ । ऽे
संता शता शता ।
इदमेव वैहायसम् ।
चतुष्कलमात्रा ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश आनिविता आशाविता आनिविसं ।
वैहायसम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविश निविता निशता शतासं ।
युग्मप्रवृत्तम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश शता ताश तासं ॥
युग्मस्थितम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निता निप्र निसं ॥
अथ युग्मप्रवृत्तान्तं महाजनस्थितान्तमुल्लोप्यकं यथा--
युग्मप्रवृत्तान्तमुल्लोप्यकं यथा--चतुष्कलमात्रा ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

ग्रानिविश ग्रानिविता ग्राशविता ग्रानिविसं ॥
वैहायसम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविश निविता निशता शतासं ॥
युग्मस्थितमयुग्मस्थितान्तमुल्लोप्यकम् ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निता शप्र निसं ॥
ग्रथायुग्मप्रवृत्तकम् । चतुष्कलमात्रा ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
ग्रानिविश ग्रानिविता ग्राशविता ग्रानिविसं ॥ वैहायसम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविश निविता निशता शतासं ॥
ऽे। ऽ ऽ । ऽ
संता शता शता ॥
इति युग्मप्रवृत्तम् । ग्रथायुग्मप्रवृत्तान्तमुल्लोप्यम् । चतुष्कलमात्रा यथा--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
ग्रानिविश ग्रानिविता ग्राशविता ग्रानिविसं ॥
इति चतुष्कला मात्रा ॥
वैहायसम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविश निविता निशता शतासं ॥
स्थितप्रवृत्तयुग्ममहाजनिकम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निता शप्र निसं ॥
ग्रथ मिश्रान्तस्य षड्भेदाः । तत्र
युग्मस्थितप्रवृत्तायुग्ममहाजनिकमिश्रान्तान्तमुल्लोप्यकं यथा--
चतुष्कला मात्रा ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

ऋानि विश ऋानि वि ता
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
ऋाश विता ऋानि विसं
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविश निविता निशता शतासं ।
इति वैहायसम् । युग्मस्थितप्रवृत्ते युग्मस्य महाजनिकम् ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निता शप्र-निसं निश ताश निसं ।
ऋथ युग्मस्थितप्रवृत्ते युग्ममहाजनिकमिश्रान्तान्तमुल्लोप्यकं यथा--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निशता शनिस । निशनि ताश प्रनिसं ।
इत्ययुग्मस्थितप्रवृत्ते युग्मस्य महाजनिकम् ।
ऋथायुग्मस्थितायुग्मप्रवृत्तमहाजनिकमिश्रान्तमुल्लोप्यकं यथा--
चतुष्कलमात्रा ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
ऋानि विश ऋानि विता
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
ऋाश विता ऋानि विसं ।
वैहायसम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविश निविता निशता शतासं
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निता शप्र निसं ।
ऽ। ऽ ऽ । ऽ
संता शता शता ॥
ऽ ऽ ऽ ऽ ऽ ऽ
निशता शनिसं ।
युग्मस्य स्थितमयुग्मस्य प्रवृत्तमहाजनिकमिति । युग्मप्रवृत्तकं यथा--
महाजनिकमिश्रान्तान्तमुल्लोप्यकं यथा--

चतुष्कलमात्रा ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विश आनि विता
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आश विता आनि विसं ।
वैहायसम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविश निविता निशता शतासं ।
ऽ ऽ ऽ ऽ ऽ ऽ
निशता प्रनिसं ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश शता शता शसं ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निता शप्र निसं ।
इत्ययुग्मस्थितयुग्मस्य प्रवृत्तमहाजनिके ।
अथ युग्मस्थितायुग्मप्रवृत्तयुग्ममहाजनिकमिश्रान्तान्तमुल्लोप्यकं यथा--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निता शप्र निसं ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विश आनि विता
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आश विता आनि विसं ।
ऽे । ऽ ऽ । ऽे
संता शता शता ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निता शप्र निसं ।
इति युग्मस्य स्थितमयुग्मप्रवृत्तं महाजनिकम् ।
अथायुग्मस्थितं युग्मप्रवृत्तायुग्ममहाजनिकमिश्रान्तमुल्लोप्यकं यथा--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

ञानि विश ञानि विता
ऽऽ ऽऽ ऽऽ ऽऽ
ञाश विता ञानि विसं ।
चतुष्कलमात्रा ।
ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ
निविश निविता निशता शतासं ।
वैहायसम् ।
ऽऽ ऽऽ ऽऽऽऽ
निश निता शप्रनिसं ।
ऽऽ ऽऽ ऽऽऽऽ
निश निता शप्रनिसं ।
ऽऽऽ ऽऽऽ
निशता शनिसं ।
इति युग्मस्थितमयुग्मस्य प्रवृत्ताभ्यामेकाङ्गो महाजनिकेन । एते षरिमश्रभेदाः । द्व्यङ्गो वा मिश्रः स्थितप्रवृत्ताभ्यामेकाङ्गो वा महाजनिकेन ।
इत्यन्तान्तमुल्लोप्यकम् ।
चतुष्कलानि चत्वारि प्रकर्यादीन्युदाहरन् १३६
प्रकरी स्याच्चतुर्वस्तुर्यद्वा सार्धत्रिवस्तुका
तत्रार्धमन्त्यमादौ स्याद्वस्तु षरामात्रमिष्यते १३७
सार्धत्रिवस्तुपद्ये तु भवेदर्धमुपोहनम्
पद्यान्तरे वस्तुमात्रं न वा स्यात्प्रत्युपोहनम् १३८
कनिष्ठासारितं प्रोक्तमत्र संहरणं बुधैः
वृत्तं च त्रिविदारीकमस्मिन्संहरणे मतम् १३९
ञन्तस्य त्वन्तिमा मात्रा कैश्चित्संहरणं मता
ञन्ते वा सप्तमी मात्रा परैः संहरणं स्मृता
वस्त्वर्धेष्विह गीताङ्गविधिर्मद्रकवद्भवेत् १४०
द्वितीयमात्रा तालान्ता प्रकर्या वस्तुनो मता
तुर्यायां द्वादशस्तालः पञ्चम्यामष्टमस्तु सः १४१

याः षोडश कलाः प्रोक्ता द्विकले मद्रकेऽन्तिमाः
ताः षष्ठ्यामद्वितीयन्त्या मात्राः शम्पान्तिमा मताः
शेषस्थानेष्वानिविप्रान्पादभागेषु निक्षिपेत् १४२
उपोहने कलापातान्नयषेधन्दन्तिलादयः १४३
षष्ठी वा सप्तमी मात्रा यदा संहरणं तदा
कनिष्ठासारितकला विनाऽन्त्यां परिकीर्तिता १४४
प्रस्तारः
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ ऽऽऽऽ
आनि विप्र आनि विप्र आनि विप्र आनि विश।
मात्रा १
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ ऽऽऽऽ
आनि विप्र आनि विप्र आनि विप्र आनि विता।
मात्रा २
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ ऽऽऽऽ
आनि विप्र आनि विप्र आनि विप्र आनि विश।
मात्रा ३
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ ऽऽऽऽ
आनि विप्र आनि विप्र आनि विता आनि विश
। मात्रा ४
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ ऽऽऽऽ
आनि विप्र आनि विता आनि विप्र आनि विश। मात्रा ५
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ ऽऽऽऽ
निश निता निता निश शता ताश ताश तासं। मात्रा ६
इति षण्मात्रात्मकं वस्तु ।
एवं चत्वारि वस्तूनि त्रीणि सार्धानि वा गीत्वा कनिष्ठासारितात्मकं संहरणं कार्यं यथा अथवाऽन्त्यसंनिपातवर्जिताभिः कनिष्ठासारितस्य कलाभिरन्वितान्त्यवस्तुनः षष्ठी मात्रा संहरणं कायम् अथवैवमात्मिका सप्तमी मात्रा संहरणं कार्यम् ।
यथा--

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
शता शता संता शता ।
ऽ ऽ ऽ ऽ ऽ ऽ
संता शता शता ।
ऽ ऽ ऽ ऽ ऽ ऽ
संता शता शता ।
इति प्रकरी ।
ओवेणकं द्वादशाङ्गं सप्ताङ्गं च परावरम्
स्यात्पादः प्रतिपादश्च माषघातोपवर्तनम्
संधिश्च चतुरस्त्रं स्याद्वज्रं संपिष्टकं ततः १४५
वेणी तथा प्रवेणी स्यादुपपातस्ततः परम्
अन्ताहरणमित्येतान्यङ्गानि द्वादशावदन्
संपिष्टकं तथा वेणीं प्रवेणीमुपवर्तनम् १४६
उपपातं विनाऽन्यानि सप्तोपाङ्गानि मेनिरे १४७
यादृक्चतुष्कले वस्तु प्रागुक्तमपरान्तके
तादृक्पादस्ततस्तद्वत्प्रतिपादः पदान्तरैः
समं पादपदार्धेन प्रतिपादं परे जगुः १४८
यथाक्षरोत्तरे शीर्षं केचिदाहुरतः परम्
शीर्षात्परो माषघातो द्विकलोत्तरतालतः १४९
अपरान्तकवत्तस्मात्परं स्यादुपवर्तनम्
ऊर्ध्वं संपिष्टकाद्वा स्यादुभाभ्यामथवा परम् १५०
तद्वदेव ततः संधिस्ततोऽपि चतुरस्त्रकम्
युग्मप्रवृत्तवत्तस्माद्वज्रं संधिवदिष्यते १५१
संपिष्टकं ततः कार्यं दश द्वादश वा कलाः
द्वादशाङ्गे दशकलं सप्ताङ्गे त्वितरन्मतम् १५२
सप्ताङ्गद्वादशाङ्गत्वे वर्णाङ्गैः केचिदूचिरे
चतुर्थी पञ्चमी चेह त्याज्ये दशकले कले १५३
भवेद्वेण्यां प्रवेण्यां च पञ्चपाणिर्यथाक्षरः
द्विकलो वाऽथवा चच्चत्पुटादूर्ध्वं यथाक्षरात् १५४

चञ्चत्पुटः स्याद्द्विकलो यद्वा वेणी यथाक्षरे
पञ्चपाणौ प्रवेणी तु द्विकले मुनिभिर्मताः
प्रवेण्यनन्तरं कैश्चिदुपवर्तनमिष्यते १५५
पादोत्तरार्धतालेन द्विकलेनोत्तरेण वा
उपपातस्ततोऽन्तेन विनाऽन्ताहरणं न वा
सत्यन्तेऽस्त्येव स द्वेधा सप्ताङ्गेऽन्यत्र तु त्रिधा १५६
लक्ष्मान्ताहरणादीनां ज्ञेयमुल्लोप्यकादिह
विधेयो विवधो वेण्यां प्रवृत्तं वा मतान्तरात्
प्रवेण्यां तु प्रवृत्तं स्यादवगाढं परे जगुः १५७
पादोपपातसंपिष्टऽप्यभ्यधुर्विविधं बुधाः
विविधो वैककं वज्र एककं तूपवर्तने १५८
विविधश्चतुरस्रे स्यादेककं वाऽथवैककम्
कलाप्रयोगनिर्मुक्तं संप्रयुज्यावपाणिना
कलास्वष्टासु विविधो विधेयो गानवेदिभिः १५९
शनिता माषघाते स्युर्द्वितीयाद्यास्त्रयः क्रमात्
संपिष्टके निशम्पास्त्रिस्त्रितालो द्विः शतौ च सम् १६०
अन्तो गीतिपदावृत्तियुक्तः सप्ताङ्गके मतः
ओवेणके द्वादशाङ्गे तुल्यगीतिः पृथक्पदः १६१
अस्य प्रस्तारः--
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ ऽऽऽऽ
आनि विप्र आनि विप्र आनि विश आनि विता ।
ऽऽ ऽऽ ऽऽ ऽऽ
आता विश आनि विश
इति पादः । एवमेव प्रतिपादः ।
पादोत्तरार्धं वा प्रतिपादो यथा--गीतिः पृथक्पदः ।
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
तानि विसं आनि विश आता विश ।
इति प्रतिपादः ॥
ऽ। ऽऽ ।ऽ

संता शता शता ॥
शीर्षकम् ॥
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र ताश निता ताश ताप्र निसं ॥
माषघातः ॥
ऽऽ ऽऽ । ऽे
संता शता शता ॥
इत्युपवर्तनम् ॥
ऽे। ऽऽ । ऽे
संता शता शता ॥
इति संधिः ॥
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निश शश शता ताता शश तासं ॥
इति सप्ताङ्ग श्रोवेणके द्वादशकलं संपिष्टकम् ॥
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निश शता ताश ताश ताता शसं ॥
ऽे। ऽऽ । ऽे
संता शता शता ॥
इति द्वादशकलं संपिष्टकम् ॥
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निश शता ताश ताश ताता शसं ॥
ऽे। ऽऽ । ऽ
संता शता शता ॥
इति द्वादशकलं संपिष्टकम् । संपिष्टकानन्तरमुपवर्तनं वा ॥
ऽे। ऽऽ । ऽे
संता शता शता ॥
इति वेणी
ऽ। ऽऽ । ऽ
संता शता शता ॥

इति प्रवेणी
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र ताश निता निश ताप्र निसं ॥
इति वा वेणी । एवमेव प्रवेणी ।
ततो मतान्तरेण प्रवेण्यनन्तरमुपवर्तनम् ॥
ऽे। ऽऽ ।ऽे
संता शता शता ॥
इत्युपवर्तनम् ॥
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
स्रानि विता स्रानि विश तानि विसं ॥
इति पादोत्तरार्धतालेनोपपातः ॥
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽ
निप्र ताश निता शनि शता प्रनिसं ॥
इति द्विकलेनोत्तरेण वोपपातः ॥
ऽे। ऽऽ ।ऽे
संता शता शता ॥
इत्यन्ताहरणम् । ततः पाद्बिकान्तो ज्ञेयः । स च सप्ताङ्गे युग्मोऽयुग्मश्चेति द्विविधः कर्तव्यः । द्वादशाङ्गे तु युग्मोऽयुग्मो मिश्रश्चेति त्रिविधः ॥
इत्योवेणकम्
सप्ताङ्गमवरं ज्ञेयं षोडशाङ्गं परं तथा
रोविन्दं तस्य षण्मात्रः पादोऽस्याऽऽद्ये कलाष्टके
उपोहनं मद्रकस्थवस्तुवच्च तदर्धयोः १६२
विविधैकैकसंयोगः प्रत्येकं पादवत्ततः
प्रतिपादः पदैरन्यैः पादस्यान्ते कलाष्टके
प्रतिपादादिमे चैका गीतिः प्रस्तारसंज्ञका १६३
शरीरं प्रतिपादान्त्यकलाद्वादशकस्थया
गीत्या ततः परं गेयमुत्तरे द्विकले बुधैः १६४
प्लुताकारास्त्रिचतुराः स्युः शरीरेऽन्तराऽन्तरा

तेषु वृत्तं तदूर्ध्वाधः स्वैरमङ्गानि योजयेत् १६५
शरीराद्यकलाषट्के प्रयोक्तव्यमुपोहनम्
विविधो वा प्रवृत्तं वा गीताङ्गं स्यादुपोहनम्
अथोपवर्तनं केचिदपरान्तकवज्जगुः १६६
शीर्षकं गीतकान्ते स्यात्पञ्चपाणौ यथाक्षरे
गीतावृत्त्या पदावृत्त्याऽप्युभयावृत्तितोऽथवा
आवृत्त्या द्विस्त्रिरथवा स्यादावृत्त्या विनाऽथवा १६७
आकारैः प्रथमावृत्तिः कर्तव्यं तत्र चैककम्
द्वितीया तु पदैर्युक्ता प्रवृत्तेन प्रकीर्तिता १६८
त्रिरावृत्तौ मध्यमा स्यात्स्वैरं गीताङ्गसंगता १६९
पादभागेष्वानिविप्रा विशेषस्तूच्यतेऽधुना
तालोऽष्टमोऽन्तिमा शम्पा तत्र मात्रासु पञ्चसु १७०
चतुर्दशस्तु पञ्चम्यां तालोऽन्त्यान्ते चन्त्येव मद्रके
शरीरे प्राक्कलास्तिस्त्रः केऽप्याहुर्माषघातवत् १७१
प्रस्तारः--
ऽऽ ऽऽ ऽऽ ऽऽ
आनि विप्र आनि विता ।
इत्युपोहनम् ।
ऽऽ ऽऽ ऽऽ ऽऽ
आनि विप्र आनि विश ।
इत्युपोहनेन सह मात्रा ।
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ
आनि विप्र आनि विता आनि विप्र आनि विश मात्रा १
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ
आनि विप्र आनि विता आनि विप्र आनि विसं ।
मात्रा २
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ
आनि विप्र आनि विता आनि विप्र आनि विसं ।
मात्रा ३

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ
ग्रानि विप्र ग्रानि विता ग्रानि विप्र ग्रानि विश ।
मात्रा ४
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ
ग्रानि विप्र ग्रानि विता ग्रानि विप्र ग्रानि विश ।
मात्रा ५
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ
ग्रानि विता ग्रानि विश ग्राता विश तानि विसं ।
मात्रा ६
इति षरामात्रः पादः । एवमेव पदान्तरैः प्रतिपादः । ततः शरीरम् ।
ऽऽ ऽ ऽ ऽऽ ऽऽ ऽ ऽऽऽ
निप्र ता श निता निश ता प्रनिसं ।
इति माषघाताद्यकलात्रययुक्तं शरीरम् ।
ऽ। ऽऽ । ऽ
संता शता शता ॥
इत्युपवर्तनम् ।
ऽ। ऽऽ । ऽ
संता शता शता ॥
इति शीर्षकम् । इति रोविन्दकम्
चतुष्कलोल्लोप्यकवदादौ मात्रोत्तरे भवेत्
शाखाऽवरा षडङ्गा स्याद्द्वादशाङ्गा परा ततः १७२
द्विकले पञ्चपाणौ सा प्रतिशाखा च तत्समा
किंतु बद्धा पदैरन्यैः शीर्षं मध्ये तयोर्भवेत्
मध्ये तयोश्च वा भिन्नगीतेनैककलान्तरे १७३
ततोऽनन्तरमेकोऽन्तो यद्वाऽन्तो नात्र विद्यते
ग्राकारवर्जं शाखायां गीताङ्गानि शरीरवत् १७४
ग्रस्य प्रस्तारो यथा--
ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ
ग्रानि विश ग्रानि विता ग्राश विता ग्रानि विसं ।

मात्रा १
ऽऽऽऽ ऽऽ ऽऽऽ ऽऽऽ
निप्रताश निता निशता प्रतिसं ।
शाखा ॥
ऽे। ऽऽ । ऽे
संता शता शता ।
इति शीर्षकम् । ततः शाखेव प्रतिशाखा ।
शाखाप्रतिशाखान्तरयोरपि शीर्षकमित्यन्ये । ततः कोऽप्येकोऽन्तः ।
अन्तर्हितं वा । इत्युत्तरम् ।
द्वौ मार्गौ गीतकेषूक्तौ शङ्कच्छत्रकसंज्ञकौ
शङ्कमार्गोऽङ्गसंक्षेपश्छत्रकस्त्वङ्गविस्तरः
विकारो बहुधा तेषु लयमार्गानुसारतः १७५
इति सप्त गीतकानि ।
अन्ते गेयं गीतकानां छन्दकं तस्य च द्विधा
शरीरं चतुरस्त्रं वा त्र्यस्त्रं वा चतुरस्त्रकम्
यैः कैश्चिदङ्गैर्नवभिश्चतुर्भिस्त्र्यस्त्रमुच्यते १७६
प्राग्वन्मुखं छन्दके स्यात्पादेन प्रतिवक्त्रकम्
मुखतालेन वा कार्यं गीतान्ते शीर्षकं भवेत् १७७
प्रस्तारः--
ऽऽ । ऽे
संता ताश ॥
इति चतुरस्त्रं शरीरम् । अथवा--
ऽ। । ऽ
शता शता ॥
इति त्र्यस्त्रं शरीरम् । अस्य मुखं गीतकान्तरमुखवत् । प्रतिमुखं
मुखवत्पादवद्वा । अन्ते शीर्षकं येन केनचिच्छीर्षकेण सदृशम् । इतरे
मुखवत्प्रतिमुखम् । इति च्छन्दकम् ।
आसारितं चतुर्धा स्यात्कनिष्ठं च लयान्तरम्
मध्यमं ज्येष्ठमित्येषां लक्ष्माणि व्याहरामहे १७८

कनिष्ठासारिते युग्मः शम्पादिर्द्वावथोत्तरौ
एते यथाक्षरास्तेषां संनिपातोऽन्तिमेऽधिकः १७९
प्रस्तारः--
ऽे ऽ । ऽे ऽे। ऽ ऽ । ऽ ऽे।
शता शता संता शता शता संता
ऽ ऽ । ऽे ऽे
शता सता सं ॥
इति कनिष्ठासारितम्
तद्वल्लयान्तरं मार्गलयाभ्यां द्विगुणं ततः
वर्धमानाङ्गमित्यन्ये
अस्य प्रस्तारः कनिष्ठासारितेन व्याख्यात एव
इति लयान्तरम्
मध्यमासारिते पुनः १८०
उत्तरा द्विकला ज्ञेयास्त्रयस्तेष्वादिमे कलाः
आद्यास्तिस्त्रस्त्यजेत्
प्रस्तारः--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
शनिता निशता प्रनिसं ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निप्रतास निश ताप्र निसं ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निप्रता शनिता निशता प्रनिसं ॥
इति मध्यमासारितम्
ज्येष्ठासारिते तूत्तरास्त्रयः
चतुष्कलाः स्युस्तेष्वाद्ये त्यजेत्सप्तमाऽदिमाः कलाः १८१
अस्य प्रस्तारः--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आताविश आनिविता आनिविश
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

आताविप्र आनिविसं ॥
इदमन्त्यखण्डं ज्ञेयम् ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आताविश आनिविश आनिविश
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आताविप्र आनिविस आनिविसा आनिविश
आताविप्र आनिविसं ॥
इति ज्येष्ठासारितम् ॥
एतेषां पञ्च षट्सप्ताष्टौ कलाः स्युः क्रमेण तु
उपोहनानि वस्तूनि त्रीणि त्रीणि च निर्दिशेत् १८२
संनिपातसमाप्तीनि तेषां मुखमुपोहनम्
युग्मतालः प्रतिमुखं कनिष्ठे च लयान्तरे
मध्यमेऽष्टौ कलास्त्वाद्या ज्येष्ठे षोडश कीर्तिताः १८३
त्र्यस्रौ शरीरसंहारौ क्रमात्सर्वेषु कीर्तितौ १८४
पादभागा विहायाऽऽद्यां शम्पामङ्गुलिकर्मणि
विभक्ताङ्गेषु तेषु स्युरविभागे यथास्थितम् १८५
उपोहनानां गुरुणी द्वे द्वे आद्यन्तयोर्मते
अष्टौ द्वादश मध्ये लाः क्रमात्षोडश विंशतिः १८६
एतेषु स्याद्ध्रुवः पातः कलयोरन्तयोर्गुरुः
एकैकमक्षरं शेषाश्चतुर्मात्रकलाः कलाः १८७
चतुर्मात्राक्षरगणा सर्वाद्यासारिते कला
संनिपातस्त्वर्धगणेऽवसानोऽन्यैरयं पुनः १८८
विभक्ताङ्गमध्यवर्ती गणेनार्धेन वा मतः
आसारितान्याहुरन्ये हीनान्यङ्गैरुपोहनैः १८९
द्विसंख्यातं त्रिसंख्यातं द्वित्रिरुच्चारणे क्रमात्
आवृत्तिद्वयमात्रास्यादर्धार्धलयमिष्यते १९१
यथाक्षरं सर्वमार्गे वृत्तिदक्षिणयोः परम्
दक्षिणे स्यात्त्रिसंख्यातं कनिष्ठं वृत्तिचित्रयोः १९२
लयान्तरं खतन्त्रे स्यादपरे त्वपरं जगुः

ध्रुवासारितमावृत्तिविधुरं ध्रुवमार्गतः १९३
इति त्रयोदशविधमासारितम् ।
कण्डिकावर्धमानं वाऽऽसारिताभासमित्यपि
वर्धमानासारितं च वर्धमानमिति त्रिधा १९४
कण्डिकाभिश्चतसृभिः कण्डिकावर्धमानकम्
विशालाऽऽद्या संगता च सुनन्दा सुमुखी तथा १९५
चतस्रः कण्डिकास्तासां नवाष्टौ षोडश क्रमात्
द्वात्रिंशच्च कला ज्ञेयाश्चतुरासारितस्थवत् १९६
क्रमादुपोहनान्यासां झंटुमित्यादिमौ गुरू
वा इत्यन्ते मुखानां स्याद्विशालायां तु मध्यमाः
लाश्चतुर्दश चत्वारश्चत्वारोऽन्येषु तेऽधिकाः १९७
एष्वक्षराणि नियतान्यब्रूत श्रेयसे विधिः १९८
भगवान्भरतोऽप्याह तानि व्यक्तानि तद्यथा १९९
तान्यक्षराणि वक्ष्ये यानि पुरा ब्रह्मगीतानि
झंटुं दिगिदिगिदिगिदिगिदिगि कुचझलझंटुमिति २००
तद्वद्वाले ज्ञेयं त्विंतिझलवृद्धिलयान्तरे गदितम्
कुचझलसहितं मध्ये तितिकुचयुक्तं भवेज्ज्येष्ठे २०१ इति च
मध्यमासारितादिस्थवस्तुवत्ताल इष्यते
विशालायां संगतायां द्विकलो युग्मसंज्ञकः
चतुष्कलः सुनन्दायां सुमुख्यां स द्विरुच्यते २०२
शम्पातालं द्विरन्ते च संनिपात उपोहने
आद्यायां द्विकलश्चाचपुटोऽन्यस्या उपोहने २०३
उद्धट्टादिः सुनन्दायां भवेद्युग्मो यथाक्षरः
स एव तालो द्विकलः सुमुख्याः स्यादुपोहने १०४
कण्डिकानां वदन्तीत्थं परिवर्तान्दशापरे
विशाला संगता वाऽऽद्या सुनन्दा संगताऽऽदिमा
सुमुखी च सुनन्दाऽऽद्या संगता च विशालिका २०५
आसारितवदत्रापि कलानां गणकल्पना २०६
प्रस्तारः--

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निशतानि शताप्रनिसं ॥
इति विशाखा
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निताश प्रनिसं ॥
इति संगता ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
ग्रानिविश ग्राताविता ग्राशविप्र ग्रानिविसं
इति सुनन्दा ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
ग्रानिविश ग्रानिता ग्राशविप्र ग्रानिविसं ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
ग्रानिविश ग्रानिविता ग्राशविप्र ग्रानिविसं ॥
इति सुमुखी । इति चतस्त्रः करिडकाः ॥
ऽ ऽ ऽ ऽ ऽ
शता शतासं ॥
इति विशालाया उफोहनम् ॥
ऽ ऽ ऽ ऽ ऽ ऽ
निश ताश निसं ॥
संगतोपोहनम् ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निशशता शताश ॥
सुनन्दाया उपोहनम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निताश प्रनिसं ॥
इति सुमुख्या उपोहनम् । परिवर्तनपद्मे तु विशाला संगता वाऽ
द्येति क्रमेण करिडकानां प्रस्तारो ज्ञेयः ॥
इति करिडकावर्धमानम् ॥
ग्रासारितवदत्रापि कलानां गणकल्पना २०६

प्रस्तारः--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निशतानि शताप्रनिसं ॥
इति विशाखा ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निताश प्रनिसं ॥
इति संगता ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
ग्रानिविश ग्रानिविता ग्राशविप्र ग्रानिविसं
इति सुनन्दा ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
ग्रानिविश ग्रानिता ग्राशविप्र ग्रानिविसं ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
ग्रानिविश ग्रानिविता ग्राशविप्र ग्रानिविसं ॥
इति सुमुखी । इति चतस्त्रः करिडकाः ॥
ऽ ऽ ऽ ऽ ऽ
शता शतासं ॥
इति विशालाया उपोहनम् ॥
ऽ ऽ ऽ ऽ ऽ ऽ
निश ताश निसं ॥
संगतोपोहनम् ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निशशता शताश ॥
सुनन्दाया उपोहनम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निताश प्रनिसं ॥
इति सुमुख्या ग्रोपोहनम् । परिवर्तनपैद्मे तु विशाला संगता वाऽऽद्येति क्रमेण करिडकानां प्रस्तारो ज्ञेयः
इति करिडकावर्धमानम् ।

आसारितानामुत्पत्तिर्वर्धमानाद्भवत्यतः
तदासारितवद्भाति विधया वक्ष्यमाणया २०७
विशाला चेन्नव कला भित्त्वाऽष्टादशधा कृता
त्यक्त्वा चान्त्यां कलां तत्तु तदा भाति कनिष्ठवत् २०८
प्रस्तारः--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
शता शता संता शता शता संता शता शता सं ॥
इति कनिष्ठासारिताभासं वर्धमानम्
संगता षट्कलमुखी विशाला चेत्ततः परा
भवेल्लयान्तराभासं तत्तालं वर्धमानकम् २०९
अस्य प्रस्तारः--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
शता शता संता शता शता संता शता शता सं
॥
आदावुपोहनं प्राग्वत्ताललयमार्गाद्विगुणं च ॥
इति लयान्तराभासम्
सोपोहना सुनन्दाऽदौ संगते द्वे ततः परे
मध्यमासारिते ताले स्यात्तदाभासकं तदा २१०
प्रस्तारः--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
शनिता निशता प्रनि सं
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
नि प्रताश निता निशता प्रनिसं निप्रताश
ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निता निशता प्रनिसं
आदौ सप्तकलमुपोहनम् ॥
इति मध्यमासारिताभासम् ।
सुमुखी कण्डिका पश्चात्सुनन्दा संगताऽदिमा
ज्येष्ठतालेन चेज्ज्येष्ठासारिताभासकं तदा २११

प्रस्तारः--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश आनिविप्र आनिविप्र आनिविश
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविश आनिविता आनिविता
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश आनिविप्र आनिविसं आनिविप्र
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश आनिविता आनिविप्र आनिविसं ।
आदावष्टकलमुपोहनं प्राग्वत् । इति ज्येष्ठासारिताभासम् ।
इति चतुर्विधमासारिताभासवर्धमानम्
इति चतुर्विधमासारिताभासं वर्धमानम् ।
आसारितेभ्य उत्पन्नं वर्धमानं विवद्ध्यते
यदा तदा वर्धमानासारितं तदुदाहरन् २१२
यदा पूर्वक्रमाद्गीतास्तालैस्तैरेव कण्डिकाः
वर्धमानासारितानि तदा चत्वारि पूर्ववत् २१३
कनिष्ठादीनि भान्त्यत्र तालांशा वर्धमानवत्
यथाक्षरादिभेदेन पुनः सर्वाण्यपि त्रिधा २१४
यथाक्षरादित्रितयं दक्षिणे वार्तिके द्वयम्
चित्रे त्वेकमितीमानि षट्प्रकाराणि मार्गतः २१५
एतेषां प्रस्तारो यथा--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
श आनि विता आनि विश आता विप्र तानि विसं
इति वर्धमानाभासं कनिष्ठासारितम् । इति वर्धमानाभासं लयान्तरम् ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विश आनि विता आश विप्र आनि विसं
इति वर्धमानाभासं मध्यमासारितम् ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विश आनि विता ताश

इति चतुष्पञ्चाशद्भेदानि वर्धमानानि ॥
इति चतुष्पञ्चाशद्भेदानि वर्धमानानि ।
आद्या रोविन्दकगता मात्रैका पाणिका मुखम्
मात्रा स्यादवराऽष्टाङ्गा षोडशाङ्गा परा मता २१६
उल्लोप्यकवदङ्गानां निवेशं कोविदा विदुः
विदार्यः स्युः स्तुतिपदैराकारान्तरितैरिह २१७
निरन्तरैः स्तुतिपदैराकारैश्चाथवा क्रमात्
मुखात्परं प्रतिमुखं मुखवत्स्यात्पदान्तरैः २१८
अथोक्तैश्चतुर्भिः स्याच्छरीरं तु यथाक्षरैः २१९
ततः शीर्षं सैककेन कार्यं संपिष्टकेन तु
अन्येऽन्ताहरणेनान्तान्विना नेच्छन्ति शीर्षकम् २२०
अस्य प्रस्तारः--
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविता
इत्युपोहनम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविश ।
इत्युपोहनमिदं मिलितमुखम् ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश आनिविता आनिविप्र आनिविसं
ऽ ऽ ऽ ऽ ऽ ऽ
संताशताशता
इति प्रतिमुखम् । ततो यथाक्षरैश्चतुर्भिरुक्तैः शरीरम् । प्रस्तारो यथा-
-
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश शश ताता शता शता तासं ।
इति शीर्षकम् । अन्ये त्वन्ताहरणसहितमन्तं शीर्षकमाहुः स
चोल्लोप्यके दर्शितः । इति पाणिका ।
आरभ्यानुष्टुभं वक्तृइर्जगत्यन्तैः पदैरपि

लौकिकैर्वैदिकैर्वाऽपि गातव्यामृचमूचिरे २२१
एकाक्षराः कला अष्टचत्वारिंशदिहोदिताः
कलानां पूरणं मन्त्रपदैः स्तोभाक्षरैरपि २२२
तान्यत्र ब्रह्मगीतानि निर्दिश्यन्तेऽधुना यथा २२३
झंटुं
जगतियवलितककुचझलतितिझलपशुपतिदिगिदिगिवादिगोंगणपति-
ततिधा इत्येतान्यब्रवीद्ब्रह्मा ॥
ओंकारश्च हकारोऽपि स्वरव्यञ्जनसंयुतः
त्रिकलः षट्कलो वाऽत्र स्तोभः स्यान्मुनिसंमतः २२४
प्रस्तावादीनि सप्तापि सामाङ्गान्यत्र चावदन्
यथाशोभं विदारीश्च वर्णांश्च रुचयेदिह २२५
इति ऋक्
कला मुनिजनैरुक्ता गाथायां चतुरक्षरा
अध्यष्टाविंशतिशतं कलानां तत्र कीर्तितम् २२६
मात्रावृत्तैः कलानां च पूर्तिः स्तोभाक्षरैरपि
कर्तव्यान्येककान्यत्र वर्णालंकारगीतयः २२७
सामाङ्गानि च भूयांसि विवधानामिहाल्पता २२८
इति गाथा
इति गाथालक्षणम्
स्तोभभङ्गीं विजानीयात्साम्नो वैदिकसामवत्
ब्रह्मणा च पुरा गीतं प्रस्तावोद्गीथकौ तथा २२९
प्रतिहारोपद्रवौ च निधनं पञ्चमं मतम्
ततो हिंकार ओंकारः सप्ताङ्गानीति तत्र तु २३०
उद्ग्राहः स्यादनुद्ग्राहः संबोधो ध्रुवकस्तथा
आभोगश्चेति पञ्चानामाद्यानामभिधाः क्रमात् २३१
हिंकारोंकारयोस्तत्र कलापूरकता मता
गायत्रीप्रभृतिच्छन्दः संकृत्यन्तमिहेष्यते २३२
ऋग्व्यूढमिति सामोक्तं गद्ये षण्णवतिः कलाः
एकाक्षराः सामगाने तदर्धमपरे जगुः

अत्रापि मन्त्रस्तोभानामृचां च त्रिकलादिकम् २३३
इति साम । इति प्रकरणानि ।
श्रीकीर्तिविजयानन्दं पार्वतीलोचनोत्सवम्
राजचूडामणिं नत्वा तालं देशीगतं ब्रुवे २३४
देशीतालस्तु लघ्वादिमितया क्रियया मतः २३५
यथाशोभं कांस्यतालध्वननादिकया मतः
अर्धमात्रा द्रुतो मात्रात्रितयं प्लुत उच्यते २३६
द्रुतादिरचनाभेदात्तालभेदोऽप्यनेकधा
तालानामधुना तेषामुद्देशं संगिरामहे २३७
आदितालो द्वितीयश्च तृतीयोऽथ चतुर्थकः
पञ्चमो निःशङ्कलीलो दर्पणः सिंहविक्रमः २३८
रतिलीलः सिंहलीलः कंदर्पो वीरविक्रमः
रङ्गः श्रीरङ्गचच्चर्यौ प्रत्यङ्गो यतिलग्नकः २३९
गजलीलो हंसलीलो वर्णभिन्नस्त्रिभिन्नकः
राजचूडामणी रङ्गो द्योतो रङ्गप्रदीपकः २४०
राजतालो वर्णतालः सिंहविक्रीडितो जयः
वनमाली हंसनादः सिंहनादः कुडुक्ककः २४१
तुरङ्गलीलः शरभलीलः स्यात्सिंहनन्दनः
त्रिभङ्गिरङ्गाभरणो मण्ठकः कोकिलाप्रियः २४२
निःसारुको राजविद्याधरश्च जयमङ्गलः
मल्लिकामोदविजयानन्दौ क्रीडाजयश्रियौ २४३
मकरन्दः कीर्तितालः श्रीकीर्तिः प्रतिपालकः
विजयो विन्दुमाली च समनन्दनमण्ठिकाः २४४
दीपकोदीक्षणौ ढेङ्की विषमो वर्णमण्ठिका
अभिनन्दोऽनङ्गनान्दीमल्लकङ्कालकन्दुकाः २४५
एतकाली च कुमुदश्चतुस्ताली च डोम्बुली
अभङ्गो रायवङ्कोलो वसन्तो लघुशेखरः २४६
प्रतापशेखरो झम्पा गजझम्पश्चतुर्मुखः
मदनः प्रतिमण्ठश्च पार्वतीलोचनो रतिः २४७

लीलाकरणयत्याख्यौ ललितो गारुगिस्तथा
रायनारायणाख्यश्च लक्ष्मीशो ललितप्रियः २४८
श्रीनन्दनश्च् जनको वर्धनो रागवर्धनः
षट्तालश्चान्तरक्रीडा हंसोत्सवविलोकिताः २४९
गजो वर्णयति सिंहः करणः सारसस्तथा
चण्डतालश्चन्द्रकलालयस्कन्दाडतालिकाः २५०
धत्ता द्वंद्वमुकुन्दौ च कुविन्दश्च कलध्वनिः
गौरीसरस्वतीकण्ठाभरणो भग्नसंज्ञकः
तालो राजमृगाङ्कश्च राजमार्तण्डसंज्ञकः २५१
निःशङ्कः शार्ङ्गदेवश्चेत्येते सोडुलसूनुना
देशीतालाः समादिष्टा विंशत्यभ्यधिकं शतम् २५२
गुर्वाद्याश्चतुरस्रादेः हण्डयित्वा निवेशिताः २५३
यद्वा लघ्वादिखण्डानामाधिक्यमिह दृश्यते
तेनैषां खण्डतालत्वमाभाषन्त पुरातनाः २५४
द्रुताद्याद्यक्षरैर्ज्ञेयं सन्ति संज्ञान्तराण्यपि
अर्धमात्रं तथा व्योम व्यञ्जनं बिन्दुकं द्रुते २५५
अल्घुनि व्यापकं ह्रस्वं मात्रिकं सरलं तथा
द्विमात्रं च कला वक्रं दीर्घं गुरुणि कीर्तितम् २५६
प्लुते त्र्यङ्गं त्रिमात्रं च दीप्तं सामोद्भवं तथा
द्रुते शंभुर्लघौ देवी गुरौ गौरीयुतः शिवः २५७
प्लुते त्रयो विरिञ्चयाद्या देवता मुनिभिः स्मृताः
द्रुते बिन्दुर्विरामान्ते तूक्ता मात्रायुता लिपिः २५८
प्लुते मात्रायुतो वक्रो लिपौ श्रीशार्ङ्गिणोदितः
तालानां लक्षणं वक्ष्ये तेषां सूरिमताश्रितम् २५९
लघ्वादितालो लोकेऽसौ रासः

। इत्यादितालः १

दौ लो द्वितीयकः ॥

० ० । इति द्वितीयः २

द्रुताद्द्रुतौ विरामान्तौ तृतीयः स्यात्

० ० ० इति तृतीयः ३

चतुर्थकः २६०

लघुद्वयं द्रुतश्चैकः

। । ० इति चतुर्थकः ४

पञ्चमस्तु द्रुतद्वयम्

० ० इति पञ्चमः ५

ताले निःशङ्कलीलाख्ये प्लुतौ द्वौ गद्वयं लघुः २६१

दर्पणे दद्वयं गश्च

० ० ऽ इति दर्पणः ७

सिंहविक्रमसंज्ञकः ॥

गत्रयं लः पलगपाः

ऽ ऽ ऽ । ऽे । ऽ ऽे इति सिंहविक्रमः ८

रतिलीले लघू गुरू २३२

। । ऽ ऽ इति रतिलीलः ९

लघ्वन्ते दत्रयं सिंहलीलो

० ० ० इति सिंहलीलः १०

दौ यगणस्तथा ॥

कन्दर्पतालस्तस्यैव पर्यायः स्यात्परिक्रमः २६३

० ० । ऽ ऽ इति कन्दर्पः ११

लघुर्द्रुतद्वयं चान्ते गुरुः स्याद्वीरविक्रमः ॥

। ० ० इति वीरविक्रमः १२

रङ्गश्चतुर्द्रुती गश्च

० ० ० ० ऽ इति रङ्गः १३

श्रीरङ्गः सगणो लपौ २६४

। । ऽ । ऽे इति श्रीरङ्गः १४

विरामान्तद्रुतद्वंद्वान्यष्टौ लघु च चञ्चरी ॥

० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० । इति चञ्चरी १५

प्रत्यङ्गो मगणो लौ द्वौ

ऽ ऽ ऽ । । इति प्रत्यङ्गः १६

यतिलग्नो द्रुतो लघुः २६५
० । इति यतिलग्नः १७
गजलीलो विरामान्तमुक्तं लघुचतुष्टयम् ॥
। । । ।ं इति गजलीलः १८
हंसलीले विरामान्तं लघुद्वयमुदाहृतम् २६६
।ं ।ं इति हंसलीलः १९
वर्णभिन्नो द्रुतौ लो गः
० ० । ऽ इति वर्णभिन्नः २०
त्रिभिन्नो लगुरुप्लुताः ॥
। ऽ ऽे इति त्रिभिन्नः २१
राजचूडामणिर्दौ द्वौ नगणश्च द्रुतौ लगौ २६७
० ० । । । ० ० । ऽ इति राजचूडामणिः २२
मगणो लप्लुतौ रङ्गोद्योतः
ऽ ऽ ऽ । ऽे इति रङ्गोद्योतः २३
रङ्गप्रदीपकः ॥
तो गप्लुतौ
ऽ ऽ । ऽ ऽे इति रङ्गप्रदीपकः २४
राजतालो गपौ दौ च गलौ प्लुतः २६८
ऽ ऽे ० ० ऽ । ऽे इति राजतालः २५
त्र्यस्रो मिश्रो द्विधा वर्णस्त्र्यस्रो लौ दौ लघुद्वयम् ॥
। । ० ० । । इति त्र्यस्रो वर्णः ॥
मिश्रो द्रुतचतुष्काः स्युर्विरामान्तास्त्रयः पृथक् २६९
ततः पगौ दौ गलौ गः
० ० ० ०ं ० ० ० ०ं ० ० ० ०ं ऽे ऽ ० ० ऽ । ऽ इति मिश्रवर्णः ॥
चतुरस्रोऽपि दृश्यते ॥
गलौ द्रुतौ गुरुश्चेति
ऽ । ० ० ऽ इति चतुरस्रवर्णः २६
सिंहविक्रीडितः पुनः २७०
लपौ गपौ पगौ लाद्गः पलौ पश्च

। ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ इति सिंहविक्रीडितः २७
जयः पुनः ॥
जो लघुर्द्वौ द्रुतौ पञ्च
। ऽ । । ० ० ऽ इति जयः २८
वनमाली चतुर्द्रुती २७१
लघुर्दौ द्वौ गुरुरिति
० ० ० ० । ० ० ऽ इति वनमाली २९
लप्लुतौ द्वौ द्रुतौ प्लुतः ॥
हंसनादः
। ऽ ० ० ऽ इति हंसनादः ३०
सिंहनादो यगणश्च लघुर्गुरुः २७२
। ऽ ऽ । ऽ इति सिंहनादः ३१
कुडुक्को द्वौ द्रुतौ लौ द्वौ
० ० । । इति कुडुक्कः ३२
विरामान्तद्रुतद्वयात् ॥
द्रुतौ तुरङ्गलीलः स्यात्
० ० ० ० इति तुरङ्गलीलः ३३
भवेच्छरभलीलकः २७३
लौ द्वौ चतुर्द्रुती द्वौ लौ
। । ० ० ० ० । । इति शरभलीलः ३४
सिंहनन्दनकः पुनः ॥
तपौ लगौ द्रुतौ गौ लः पलपा गो लघू ततः २७४
चत्वारो लघवोऽशब्दाः
ऽ ऽ । ऽ । ऽ ० ० ऽ ऽ । ऽ । ऽ ऽ । । ४ ≍ इति सिंहनन्दनः ३५
त्रिभङ्गिः सगणाद्गुरुः ॥
। । ऽ ऽ इति त्रिभङ्गिः ३६
रङ्गाभरणताले ताल्लप्लुतौ
ऽ ऽ । । ऽ इति रङ्गाभरणः ३७
मणठके पुनः २७५

साच्चतुर्लघु निःशब्दम्

। । ऽ ४ ≍ इति मराठः ३८

यद्वा भाद्धावशब्दकौ ॥

ऽ । । २ ≍ इति वा मराठः ॥

भाच्चतुर्लघु निःशब्दं भवेन्मुद्रितमराठके ॥

ऽ १ १ ४ ≍ इति मुद्रितमराठः ॥

मराठो न जौ लघुर्यद्वा

। । । । ऽ । । इति वा मराठः ॥

प्रोक्ताः षडपरा भिदाः २७६

मराठरूपकवेलायाम्

इति दशविधमराठः ।

कोकिलाप्रियनाम्नि तु ॥

गलपाः स्युः

ऽ । ऽे इति कोकिलाप्रियः ३९

विरामान्तौ लघू निःसारुको मतः २७७

।ि ।ि इति निःसारुकः ४०

लघुर्गुरुर्द्रुतद्वंद्वं राजविद्याधरो भवेत् ॥

। ऽ ० ० इति राजविद्याधरः ४१

सगणद्वितयं यत्र स तालो जयमङ्गलः २७८

। । ऽ । । ऽ इति जयमङ्गलः ४२

मल्लिकामोदताले तु लौ द्वौ द्रुतचतुष्टयम्

। । ० ० ० ० इति मल्लिकामोदः ४३

विजयानन्दसंज्ञे तु लघुद्वंद्वं गुरुत्रयम् २७९

। । ऽ ऽ ऽ इति विजयानन्दः ४४

क्रीडा द्रुतौ विरामान्तौ चराडनिःसारुकश्च सः ॥

०ि ०ि इति क्रीडातालश्चराडनिःसारुकश्च ४५

जयश्री रगणाल्लो गः

ऽ । ऽ । ऽ इति जयश्रीः ४६

दौ लौ लो मकरन्दकः २८०

० ० । । । इति मकरन्दः ४७
लषौ गलौ प्लुतः कीर्तिः
। ऽे ऽ । ऽे इति कीर्तितालः ४८
श्रीकीर्तिर्द्वौ लघू गुरू ॥
। । ऽ ऽ इति श्रीकीर्तिः ४९
लो द्रुतौ प्रतितालः स्यात्
। ० ० इति प्रतितालः ५०
विजयः पगपा लघुः २८१
ऽे ऽ ऽे इति विजयः ५१
गुर्वोर्मध्ये तु चत्वारो विन्दवो बिन्दुमालिनी ॥
ऽ ० ० ० ० ऽ इति बिन्दुमाली ५२
समो लौ दौ विरामान्तौ
। । ०́ ०́ इति समः ५३
लघुर्दौ पञ्च नन्दनः २८२
। ० ० ऽे इति नन्दनः ५४
गुरुद्रुतप्लुताः प्रोक्ता मरिठका
ऽ ० ऽे इति मरिठका ५५
अन्यैस्तु लद्वयम् ॥
विरामादिद्रुतौ द्वौ च मरिठका परिकीर्तिता २८३
०́ ० इति मरिठका ॥
दीपको दलगा द्विर्द्विः
० ० । । ऽ ऽ इति दीपकः ५६
लौ द्वौ गुरुरुदीन्नरणः ॥
। । ऽ इत्युदीन्नरणः ५७
रगणो ढेङ्किका कैश्चिदेष प्रोक्तस्तु योजनः २८४
ऽ । ऽ इति ढेङ्की ५८
द्विश्चत्वारो विरामान्ता द्रुतास्तु विषमे मताः ॥
० ० ० ०́ ० ० ० ०́ इति विषमः ५९
द्वौ लौ द्वौ दौ लघुर्दौ द्वौ कीर्तिता वर्णमरिठका २८५

।। ०० । ०० इति वर्णमण्ठिका ६०
अभिनन्दो लघुद्वंद्वं द्रुतयुग्मं गुरुस्तथा ॥
।। ०० ऽ इत्यभिनन्दः ६१
लप्लुतौ सगणोऽनङ्गः
। ऽे ।। ऽ इत्यनङ्गः ६२
नान्दी लो दौ लघू गुरू २८६
। ०० ।। ऽ ऽ इति नान्दी ६३
मल्लतालो विरामान्तद्विविन्द्वन्तं चतुर्लघु ॥
।।।। ० ०́ इति मल्लतालः ६४
उक्तश्चतुर्धा कङ्कालः पूर्णः खण्डः समोऽसमः २८७
चतुर्द्रुती गलौ पूर्णः
० ० ० ० ऽ । इति पूर्णः ॥
खण्डो दौ द्वौ गुरुद्वयम् ॥
० ० ऽ ऽ इति खण्डः ॥
समो गुरू द्वौ लघ्वन्तौ
ऽ ऽ । इति समः ॥
विषमो लाद्गुरुद्वयं २८८
। ऽ ऽ इति विषमः ॥
इति चतुर्धा कङ्कालः ६५
कन्दुको लौ च सगणः
।।।। ऽ इति कन्दुकः ६६
द्रुतेन त्वेकतालिका ॥
० इत्येकताली ६७
कुमुदो लाद्द्रुतौ लौ गश्च
। ०० ।। ऽ इति कुमुदः ६८
अन्येषां लश्चतुर्द्रुती २८९
अन्ते गुरुश्च कुमुदः
। ० ० ० ० ऽ इति वा कुमुदः ।
चतुस्तालो गुरोः परे ॥

त्रयो द्रुताः

ऽ ० ० ० इति चतुस्तालः ६९

डोम्बुली तु द्विर्लघु स्याद्विरामवत् २९०

। । इति डोम्बुली ७०

अभङ्गो लप्लुतौ

। ऽ इत्यभङ्गः ७१

रायवङ्कोलो रगणाद्द्रुतौ ॥

ऽ । ऽ ० ० इति रायवङ्कोलः ७२

वसन्तो न्मौ

। । । ऽ ऽ ऽ इति वसन्तः ७३

विरामान्तलघुना लघुशेखरः २९१

। इति लघुशेखरः ७४

प्रतापशेखरो दीप्ताद्विरामान्तं द्रुतद्वयम् ॥

ऽ ० ० इति प्रतापशेखरः ७५

झम्पातालो विरामान्तं द्रुतद्वंद्वं लघुस्तथा २९२

० ० । इति झम्पातालः ७६

गजझम्पो गुरोरूर्ध्वं विरामान्तं द्रुतत्रयम् ॥

ऽ ० ० ० इति गजझम्पः ७७

चतुर्मुखो जप्लुताभ्यां स एवोन्मातृको मतः २९३

। ऽ । ऽ इति चतुर्मुखः ७८

दद्वयं गश्च मदनः

० ० ऽ इति मदनः ७९

सो भो वा प्रतिमण्ठकः ॥

कोल्लकोऽन्यैरयं प्रोक्तः

। । ऽ ऽ । । इति प्रतिमण्ठकः ८०

पार्वतीलोचने पुनः २९४

मलपा द्वौ गुरू दौ द्वौ

ऽ ऽ ऽ । ऽ ऽ ऽ ० ० इति पार्वतीलोचनः ८१

रतितालो लघुर्गुरुः ॥

। ऽ इति रतितालः ८२
लीला दलौ पः
० । ऽ̀ इति लीलातालः ८३
करणयतौ द्रुतचतुष्टयम् ॥
० ० ० ० इति करणयतिः ८४
ललितो द्वौ द्रुतौ लो गः
० ० । ऽ इति ललितः ८५
गारुगिस्तु चतुर्द्रुती २९५
विरामान्ता बुधैरुक्ता
० ० ० ०̀ इति गारुगिः ८६
राजनारायणः पुनः ॥
द्रुतौ द्वौ जगणो वक्रः
० ० । ऽ । ऽ इति राजनारायणः ८७
लक्ष्मीशे तु द्रुतद्वयम् २९६
विरामान्तं लप्लुतौ च
० ०̀ । ऽ इति लक्ष्मीशः ८८
तालस्तु ललितप्रियः ॥
ऊर्ध्वं लघुभ्यां रगणः
। । ऽ । ऽ इति ललितप्रियः ८९
स्यातां श्रीनन्दने भपौ २९७
ऽ । । ऽ̀ इति श्रीनन्दनः ९०
जनको नयसा वक्रः
। । । । ऽ ऽ ऽ । । ऽ इति जनकः ९१
वर्धनो द्वौ द्रुतौ लपौ ॥
० ० । ऽ̀ इति वर्धनः ९२
विरामान्तौ द्रुतौ बिन्दुस्त्रिमात्रो रागवर्धनः २९८
० ०̀ ० ऽ̀ इति रागवर्धनः ९३
द्रुतैः षड्भिस्तु षट्तालः
० ० ० ० ० ० इति षट्तालः ९४

अन्तरक्रीडा तु कथ्यते ॥
द्रुतत्रयं विरामान्तम्
० ० ० इत्यन्तरक्रीडा ६५
हंसे सविरती लघू २६६
। । इति हंसः ६६
लघुप्लुतावुत्सवः स्यात्
। ऽ इत्युत्सवः ६७
गो दौ दीप्तो विलोकिते ॥
ऽ ० ० ऽ इति विलोकितः ६८
गजश्चतुर्ला धाराऽसौ
। । । । इति गजः ६६
लौ दौ वर्णयतिर्भवेत् ३००
। । ० ० इति वर्णयतिः १००
सिंहे लदौ लत्रयं च
। ० । । । इति सिंहः १०१
गुरुणा करुणो मतः ॥
ऽ इति करुणः १०२
लघुर्द्रुतानां त्रितयं लघू द्वौ सारसः स्मृतः ३०१
। ० ० ० । । इति सारसः १०३
द्रुतत्रयं लघुद्वंद्वं चण्डताले बभाषिरे ॥
० ० ० । । इति चण्डतालः १०४
मगणश्च त्रयो दीप्ता लघुश्चन्द्रकलाभिधे ३०२
ऽ ऽ ऽ ऽ ऽ ऽ । इति चन्द्रकला १०५
गलौ प्लुतत्रयं वक्रः प्लुतो बिन्दुत्रयं लये ॥
ऽ । ऽ ऽ ऽ ऽ ऽ ० ० ० इति लयः १०६
रो द्रुतौ द्वौ गुरू स्कन्दः
ऽ । ऽ ० ० ऽ ऽ इति स्कन्दः १०७
अडताली दो लघुद्वयम् ३०३
इममेवोचिरे तालं केचित्त्रिपुटसंज्ञया

० । । इत्यडताली १०८

द्वौ लौ द्वौ दौ लगौ धत्ता

। । ० ० । ऽ इति धत्ता १०९

द्वंद्वः सतगणौ प्लुतः ३०४

। । ऽ ऽ ऽ । ऽ इति द्वंद्वः ११०

मुकुन्दे तु लघोर्बिन्दुचतुष्टयमथो गुरुः ॥

। ० ० ० ० ऽ इति मुकुन्दः १११

कुविन्दके लघुर्बिन्दुद्वयं गुरुरथ प्लुतः ३०५

। ० ० ऽ ऽ इति कुविन्दकः ११२

कलध्वनिर्लघुद्वंद्वं गुरुर्लघुरथ प्लुतः ॥

। । ऽ । ऽ इति कलध्वनिः ११३

पञ्चभिर्लघुभिर्गौरी

। । । । । इति गौरी ११४

द्वौ गुरू द्वौ लघुद्रुतौ ३०६

ताले सरस्वतीकण्ठाभरणे शार्ङ्गिसंमतौ ॥

ऽ ऽ । । ० ० इति सरस्वतीकण्ठाभरणः ११५

भग्नताले चतुर्बिन्दु नगणश्च विरामवान् ३०७

० ० ० ० । । । इति भग्नतालः ११६

ताले राजमृगाङ्के तु द्रुतौ लघुरथो गुरुः ॥

० ० । ऽ इति राजमृगाङ्कः ११७

गुरुर्लघुर्द्रुतस्ताले राजमार्तण्डसंज्ञके ३०८

ऽ । ० इति राजमार्तण्डः ११८

निःशङ्कसंज्ञके ताले लगुरू पगुरू गलौ ॥

। ऽ ऽ ऽ ऽ ऽ ऽ । इति निःशङ्कः ११९

शार्ङ्गदेवे द्रुतद्वंद्वं गप्लुतौ गद्वयं लघुः ३०९

० ० ऽ ऽ ऽ ऽ । इति शार्ङ्गदेवः १२०

इति विंशत्युत्तरशतं देशीतालाः ॥

अन्येऽपि सन्ति भूयांसस्तालास्ते लक्ष्मवर्त्मनि

प्रसिद्धिविधुरत्वेन शास्त्रेऽस्मिन्न प्रदर्शिताः ३१०

तद्भेदप्रत्ययार्थं तु लघूपाया भवन्त्यमी
प्रस्तारसंख्ये नष्टं चोद्दिष्टं पातालकस्ततः ३११
द्रुतमेरुर्लघोर्मेरुर्गुरुमेरुः प्लुतस्य च
मेरुः संयोगमेरुश्च खराडप्रस्तारकस्ततः ३१२
प्राचां चतुर्णां मेरूणां नष्टोद्दिष्टे पृथक्पृथक्
एकोनविंशतिरिति प्रत्ययास्तान्ब्रुवेऽधुना ३१३
न्यस्याल्पमाद्यान्महतोऽधस्ताच्छेषं यथोपरि ३१४
प्रागूने वामसंस्थांस्तु संभवे महतो लिखेत्
अल्पानसंभवे तालपूर्त्यै भूयोऽप्ययं विधिः ३१५
सर्वद्रुतावधिः कार्यः प्रस्तारोऽयं लघौ गुरौ
प्लुते व्यस्ते समस्ते च न तु व्यस्ते द्रुतेऽस्ति सः ३१६
इति प्रस्तारः ।
एकद्व्यङ्कौ क्रमान्न्यस्य युञ्जीतान्त्यं पुरातनैः
द्वितीयतुर्यषष्ठाङ्कैरभावे तुर्यषष्ठयोः ३१७
सर्वद्रुतावधिः कार्यः प्रस्तारोऽयं लघौ गुरौ
प्लुते व्यस्ते समस्ते च न तु व्यस्ते द्रुतेऽस्ति सः ३१६
इति प्रस्तारः
एकद्व्यङ्कौ क्रमान्न्यस्य युञ्जीतान्त्यं पुरातनैः
द्वितीयतुर्यषष्ठाङ्कैरभावे तुर्यषष्ठयोः ३१७
तृतीयपञ्चमाङ्काभ्यां क्रमात्तं योगमग्रतः
लिखेद्दक्षिणसंस्थैवमङ्कश्रेणी विधीयते ३१८
सा चाङ्कैरिष्टतालस्थद्रुतसंख्यैः समाप्यते ३१९
द्रुतो लघुः सार्धमात्रो गुरुः सार्धद्विमात्रिकः
प्लुतः सार्धत्रिमात्रश्चेत्येकैकद्रुतवर्धितैः
तालभेदाः क्रमादङ्कैः संख्यायन्ते स्थितैरिह ३२०
यदङ्कयोगादन्त्योऽङ्को लब्धस्तैरन्ततः क्रमात्
भेदा द्रुतान्तलघ्वन्तगुर्वन्ताश्च प्लुतान्तकाः
संख्यायन्त इति प्रोक्ताः संख्या निःशङ्कसूरिणा ३२१
इति संख्या ।

अत्रैतावतिथो भेदः किंरूप इति पृच्छति
यत्र तन्नष्टमाख्यातं तस्योत्तरमिहोच्यते ३२२
भेदानां यावतां मध्ये नष्टप्रश्नः कृतो भवेत्
तावत्संख्याङ्कपर्यन्तां लिखेत्संख्याङ्कसंततिम्
अन्त्याङ्के तत्र नष्टाङ्कं पातयेदथ शेषतः ३२३
पातयेत्पूर्वपूर्वाङ्कं तत्र त्वपतितो द्रुतः
पूर्वश्चेत्पतितो न स्याल्लघुस्तु पतिताद्भवेत् ३२४
उत्तरेणाकृतार्थेन सहितात्तदसंभवे
अकृतार्थेन पूर्णेन सान्तरे पतिते पृथक्
लघुर्निरन्तरे त्वस्मिल्लँघुरेव गुरुर्भवेत् ३२५
गुरुहेतोस्तृतीये तु पतिते गः प्लुती भवेत् ३२६
अङ्काभावे द्रुता ग्राह्यास्तालपूरणहेतवः
इति नष्टस्य विज्ञेयमुत्तरं रूपनिर्णयात् ३२७
इति नष्टम्
ईदृग्रूपोऽत्र कथितो भेदः प्रश्न इतीदृशः
उद्दिष्टं तत्र संख्याङ्कसंततिं नष्टवल्लिखेत् ३२८
यैरङ्कैः पतितैर्नष्टे लभ्यन्ते ये द्रुतादयः
तानेवाङ्काल्लँभन्ते ते भेदमुद्दिष्टमाश्रिताः ३२९
यद्वा षट्प्लुतहेत्वङ्कमध्येऽन्त्यात्प्राचि सप्तमे
तदभावे तु षष्ठाङ्के पातितेऽन्त्याङ्कमध्यतः ३३०
यः शेषः स प्लुताल्लभ्यो लब्धहीनान्त्यशेषतः
ज्ञानं पूरणसंख्याया उद्दिष्टोत्तरमिष्यते ३३१
इत्युद्दिष्टम्
आदौ रूपमथैकैकमङ्कसंख्याङ्कसंततेः
क्रमादधोऽधो विन्यस्येदन्त्यादींश्चतुरस्तथा ३३२
स्वपङ्क्तिस्थाल्लिँखेदङ्कानग्रे संख्याङ्कवद्युतान्
किंतु प्रतिनिधिर्नात्र विद्यते तुर्यषष्ठयोः ३३३
इष्टतालद्रुतमितेष्वङ्केषु लिखितेष्विति
क्रमादन्त्योपान्त्यतुर्यषष्ठैर्यत्र द्रुतादयः

मीयन्ते सर्वभेदस्थाः पातालः सोऽभिधीयते ३३४
इति पातालः
पङ्क्तिं कृत्वेष्टतालस्थद्रुतसंमितकोष्ठिकाम्
तिरश्चीं तत्परामूनां कोष्ठेनाथ ततः पराः
द्विद्विकोष्ठोनिताः स्वस्वपूर्वतोऽथाङ्कयोजना ३३५
द्वौ द्वौ तासामाद्यकोष्ठौ स्यातामेकाङ्कसंयुतौ ३३६
अधस्तन्यास्तृतीयादौ विषमे कोष्ठके लिखेत्
अन्त्याद्यङ्कचतुष्कस्य योगं संख्याङ्कसंघवत् ३३७
समे त्वन्त्यं विनैतेषां योगं न्यस्याथ पङ्क्तिषु
परासु शेषकोष्ठेषु चतुर्योगोऽयमिष्यते
नास्ति प्रतिनिधिस्त्वासामङ्कयोस्तुर्यषष्ठयोः ३३८
तासु स्वभावतो यास्तु निष्पन्ना ऊर्ध्वपङ्क्तयः ३३९
तन्मध्ये तु समे कोष्ठेऽन्त्यस्थानेऽन्त्यादधस्तनः
अङ्कः कार्योऽथ तैरङ्कैर्भेदसंख्याऽभिधीयते ३४०
विषमायामूर्ध्वपङ्क्तौ स्थितैरङ्कैरधः क्रमात्
एकद्रुताद्या विषमत्र्यादिसंख्या द्रुता भिदाः
सर्वद्रुतान्ता मीयन्ते समपङ्क्तिस्थितैः पुनः ३४१
द्रुतहीनादयो द्व्यादिसमसंख्या द्रुता भिदाः
सर्वद्रुतान्ता ज्ञायन्ते द्रुतमेरुरयं मतः ३४२
ऊर्ध्वपङ्क्तिस्थसर्वाङ्कयोगात्संख्याऽपि गम्यते ३४३
इति द्रुतमेरुः

१ १
१ १ ७ ८
१ १ ५ ७ २० २७
१ १ ३ ४ ९ १४ २५ ४४
१ १ २ २ ५ ४ १२ ७ २६
१ २ ३ ४ ५ ६ ७ ८ ९
० । ०। ऽ ०ऽ ऽ̆ ०ऽ̆ ।ऽ̆ ०।ऽ̆

इति द्रुतमेरुकोष्ठखम्

इति द्रुतमेरुः
लघुमेरौ कोष्ठपङ्क्तीः प्राग्वन्न्यसेत्तदादिमः
एकैककोष्ठ एकाङ्कयुक्तोऽधःपङ्क्तिकेषु तु
शेषकोष्ठेष्वन्त्यतुर्यषष्ठयोगं निवेशयेत् १४४
परासां शेषकोष्ठेषूपान्त्याधस्तनसंयुतम्
त्रियोगमेवमादध्यादत्र च द्रुतमेरुवत् ३४५
सदसत्त्वे प्रतिनिधिः कोष्ठाङ्कैरूर्ध्वपङ्क्तिगैः ४५६
लघुहीनादुपक्रम्यैकाद्येकोत्तरवृद्धलाः
सर्वलान्ताः क्रमाज्ज्ञेयाः संख्या सर्वाङ्गसंगतेः ३४७
इति लघुमेरुः

१
१ ५ १५
१ ४ १० २० २९
१ ३ ६ १० १८ ३३ ६१
१ २ ३ ४ ७ १२ २१ ३४ ५५
१ १ १ २ ३ ५ ७ १० १४ २१
१ २ ३ ४ ५ ६ ७ ८ ९ १०

इति लघुमेरुः
गुरुमेरावधःपङ्क्तेः परा कोष्ठत्रयोनिता
चतुश्चतुष्कोष्ठहीनाः स्वस्वपूर्वाबलेः पराः ३४८
एकाङ्कवन्त आद्याद्यकोष्ठाः प्रथमपङ्क्तिगः
द्वितीयो द्व्यङ्कवानन्त्योपान्त्यषष्ठाङ्कयोगिनः ३४९
शेषकोष्ठाः परासां तु द्वितीयादिषु लिख्यते
योगोऽन्त्योपान्त्यषष्ठानामधस्तुर्याङ्कसंयुतः ३५०
लघुस्थाने गुरुर्ज्ञेयः शेषं तु लघुमेरुवत् ३५१
इति गुरुमेरुः ।

८ ३ १
१ २ ५ १० २० ३८ ७३
१ २ ३ ५ ८ १४ २३ २९ ६५ १०८

१ २ ३ ४ ५ ६ ७ ८ ९ १०
इति गुरुमेरुः
प्लुतमेरावधःपङ्क्तेः पञ्चकोष्ठोनिता परा
तत्पराः स्वस्वपूर्वान्ताः षट्षट्कोष्ठोनिता मताः ३५२
अधःपङ्क्तौ तु षष्ठाङ्कस्थाने तुर्यं नियोजयेत्
त्रियोगोऽयमधः षष्ठयुक्तः स्यात्परपङ्क्तिषु ३५३
प्लुतो ज्ञेयो गुरुस्थाने शेषं तु गुरुमेरुवत् ३५४
इति प्लुतमेरुः
१ २ ५ १० २२ ४४
१ २ ३ ६ १० १८ ३१ ५५ ९६ १६८ २९६
इति प्लुतमेरुकोष्ठकम्
इति प्लुतमेरुः
संयोगमेरावूर्ध्वाः स्युश्चतस्रः कोष्ठपङ्क्तयः
इष्टतालद्रुतमितैः कोष्ठैर्युक्तास्ततः परे ३५५
द्वे पङ्क्ती स्वस्वपूर्वातो द्विद्विकोष्ठोनिते ततः
द्वे षष्ठ्या एककोष्ठोने ततस्तिस्रोऽष्टमावलेः ३५६
एककोष्ठोनिताः पश्चाद्द्विद्विकोष्ठोनिते परे
पङ्क्तिभ्यां स्वस्वपूर्वाभ्यां तथैकैकोनिते परे ३५७
आद्यासु चतसृष्वासां क्रमेण सकलद्रुताः
समस्तलघवः सर्वगुरवः सकलप्लुताः ३५८
एकाङ्कयुक्तनिःशेषकोष्ठाऽऽद्या स्यात्परा पुनः
खयुक्तैर्विषमैः कोष्ठैः समैस्त्वेकाङ्कसंयुतैः ३५९
कर्तव्या गुरुपङ्क्तेस्तु त्रयः कोष्ठा न भोन्विताः
तुर्य एकाङ्कवानेवं चतुष्कोष्ठ्योः परा अपि ३६०
प्लुतपङ्क्तौ सशून्याः स्युः पञ्च षष्ठस्तु रूपवान्
षट्कोष्ठ्यस्तद्वदन्याः स्युः षट्सु पङ्क्तिष्वनन्तरम् ३६१
द्वियोगजाः क्रमाद्भेदादलघू दगुरू दपौ
लगौ लपौ गपौ चेति तदङ्कप्रक्रिया त्वियम् ३६२
अत्रोपरिष्टादारभ्य स्यादधोऽधोऽङ्कलेखनम्

अन्त्यपूर्वद्वितीयाङ्कतुर्यषष्ठास्तथा क्रमात्  ३६३
योज्या दलगपेषु स्युस्तेषु यद्योगजा भिदाः
पङ्क्तौ तदङ्कयोगाङ्कं तत्कोष्ठे संभवाल्लिँखेत्  ३६४
लेख्यपङ्क्त्युपरिश्रेणी या तिरश्ची तदाश्रिताः ३६५
अङ्का दलगपानां स्युराद्यपङ्क्तिचतुष्टये
तेषु प्रस्तुतभेदस्थद्रुतादिव्यक्तिसंश्रितान्  ३६६
अङ्कान्गृह्णीत तेऽप्यन्त्यद्वितीयाद्या द्रुतादिषु
प्रस्तुतेषु विपर्यस्ताः स्युरङ्कासंभवे तु खम्  ३६७
त्रियोगजाश्च ये भेदाश्चतुर्योगभवश्च यः
तत्पङ्क्तीनामपि ज्ञेयमेवमेवाङ्कपूरणम्  ३६८
किंतु त्रियोगजे भेदे ये त्रयः स्युर्द्वियोगजाः
तेषां संनिहिताद्यानां प्रागुक्तोऽङ्कविपर्ययः  ३६९
चतुर्योगे तु चत्वारो ये स्युर्भेदास्त्रियोगजाः
तदङ्केष्वेव पूर्वोक्तं स्याद्विपर्यासयोजनम्  ३७०
ये चत्वारस्त्रियोगोत्थाश्चतुर्योगोत्थपञ्चमाः
भेदास्ते पङ्क्तिषु ज्ञेयाः क्रमादन्त्यासु पङ्क्तिषु  ३७१
दलगा दलपाश्चैव दगपा लगपाः क्रमात्
त्रियोगजाश्चतुर्योगोद्भवा दलगपा इति ३७२
एष संयोगमेरुः स्यादतो ज्ञेयमथोच्यते  ३७३
तिर्यक्पङ्क्तिस्थकोष्ठाङ्कैस्तैस्तैः सर्वद्रुतादयः
ऊर्ध्वपङ्क्तिगता मेयास्तदभावस्तु शून्यतः  ३७४
तावद्द्रुतोऽत्र तालः स्यात्पङ्क्तिर्यावतिथी तिरः
उपरिष्ठात्समारभ्य संख्या पङ्क्त्यङ्कसंगतेः  ३७५
इति संयोगमेरुः
संयोगमेरुकोष्ठक्तम्

| | | | | | |
|---|---|---|---|---|---|
| ० | ० | । | ऽ | ऽ | |
| १ | १ | ० | ० | ० | |
| २ | १ | १ | ० | ० | ०। |
| ३ | १ | ० | ० | ० | २ |

४ १ १ १ ० ३ ०ऽ
५ १ ० ० ० ७ २ ०ऽे ।ऽ
६ १ १ ० १ ११ ३ ० २ ।ऽे ऽऽे
७ १ ० ० ० २० ४ २ ० ० ०
८ १ १ १ ० ३२ ५ ३ ३ २ ०
९ १ ० ० ० ५४ ९ ४ ० ० ०
१० १ १ ० ० ८७ १३ ५ ७ ३ २
११ १ ० ० ० १४३ १८ ६ ० ० ०
१२ १ १ १ १ २३१ २४ ७ ११ ४ ०
१३ १ ० ० ० ३७६ ३५ ११ ० ० ०

०।ऽ
६
१२ ०।ऽे
३२ ६
६० १२ ०ऽऽे
१३४ ३२ ६ ।ऽऽे
२५१ ६० १२ ६ ०।ऽऽे
५०० १२२ २० ० २४
इति संयोगमेरुः
द्रुतहीनादयो भेदोद्धारा ये मेरुबोधिताः
सर्वप्रस्तारवत्तेषां प्रस्तारः किं तु तेषु यः
द्रुतादिनियमः सोऽत्र न भङ्क्त्यः प्रयत्नतः ३७६
इति खण्डप्रस्तारः
संख्यैषा मेरुकोष्ठाङ्काद्यस्मात्पूर्वोक्तरीतितः ३७७
लभ्यते तत्र नष्टाङ्कं पातयेदथ शेषतः
तृतीयपञ्चमोपान्त्यावपाते लभ्यते लघुः ३७८
परो यद्यकृतार्थः स्यात्सह तेनाथ चेदुभौ
अकृतार्थौ ततस्ताभ्यां स्वं विनैवैष लभ्यते

परे कृतार्थे ग्राह्यः स्यादकृतार्थः पुरातनः ३७९
पतितादुरुलाभः स्यात्सह प्राचा तदा परा
चतुरङ्की निवर्तेत पतिते पञ्चमेऽप्यथ
गुरुः प्लुती भवेत्प्राचा सह चैषा निवर्तते ३८०
रूपाप्तौ प्रापकाङ्केभ्यः शेषेष्वेष पुनर्विधिः
गुरुलाभे त्वपातार्हः पञ्चमः शेषतां व्रजेत् ३८१
अङ्काभावे तु गृह्यन्ते लघवस्तालपूर्तये ३८२
इति नष्टम्
इति मेरोरधःपङ्क्तिसमकोष्ठनष्टम् ।
उद्दिष्टे तु गुरोर्लभ्यस्तृतीयोऽन्त्यात्पुरातनः
प्राग्वच्चतुर्निवृत्तिः स्यात्तृतीयः पञ्चमस्तथा ३८३
प्लुतालाप्यो निवृत्तिस्तु षरणामथ पुनर्विधिः
लघोरङ्को न लभ्येत निवृत्तिस्त्वङ्कयोर्द्वयोः
लब्धाङ्कयोगहीनेऽन्त्ये शेषादुद्दिष्टबोधनम् ३८४
इत्युद्दिष्टम्
इति द्रुतमेर्वधःपङ्क्तिसमकोष्ठोद्दिष्टम्
समस्तनष्टवन्नष्टं विषमे कोष्ठके भवेत्
द्रुते लब्धे ततः पूर्वैरङ्कैः स्यात्समकोष्ठनष्टम् ।
इति द्रुतमेर्वधःपङ्क्तिविषमकोष्ठनष्टम् ।
कोष्ठे समोर्ध्वपङ्क्तिस्थे परासामधिको भवेत्
द्वितीयाधस्तनः पात्यस्तत्र त्वपतिता द्रुताः
पतिताल्लः पात्यपातानन्तर्योऽल्पो महान्भवेत् ३८७
रूपपूर्तौ निवर्तन्ते पूर्ववत्स्वीयपङ्क्तिगाः ३८८
अधःसमवदन्यत्स्यान्निवृत्तौ तु पुनर्विधिः
यस्मात्स यस्यामूर्ध्वायां पङ्क्तौ सा विषमा यदि ३८९
विधिर्विषमकोष्ठोक्तः समा चेत्तदयं मतः
विषमोर्ध्वश्रेणिसंस्थे कोष्ठेऽधोविषमोदितः ३९०
इति परपङ्क्तिनष्टम्
इति द्रुतमेरुपरपङ्क्तिनष्टम् ।

यैरङ्कैः पतितैर्नष्टं लभ्यन्ते ये प्लुतादयः
तेभ्य उद्दिष्टसंस्थेभ्यस्तदङ्कावाप्तिरिष्यते ३९१
द्रुतहीनाद्यकोष्ठासु पङ्क्तिषूर्ध्वासु यो लघुः
तस्मादुद्दिष्टरूपस्थान्नाङ्कः कश्चिदवाप्यते
लब्धाङ्कन्यूनितान्त्याङ्कशेषादुद्दिष्टवेदनम् ३९२
इति परपङ्क्त्युद्दिष्टम्
इति द्रुतमेरुपरपङ्क्त्युद्दिष्टम्
लघुमेरावधःपङ्क्तेर्नष्टाङ्केनान्त्यशेषतः
पूर्वेषां पात्यमानानामपाते पूर्ववद्द्रुतः ३९३
पतितात्सह पूर्वाभ्यां परेण च गुरुर्भवेत्
पतिते वृत्तगुर्वङ्कानन्तरे गः प्लुती भवेत्
एवं नष्टस्य बोधः स्यादित्युक्तं सूरिशार्ङ्गिणा ३९४
इति लघुमेर्वधःपङ्क्तिनष्टम्
नष्टे तु परपङ्क्तीनां पातयेत्प्रातिलोम्यतः
द्वितीयं च तृतीयाधस्तनमङ्कं च पञ्चमम् ३९५
परेषु च निवृत्तेषु शेषेष्वेष पुनर्विधिः
समस्तनष्टवच्चात्र द्रुतादेः प्राप्तिरिष्यते ३९६
किं तु लब्धे लघौ शेषेष्वाद्याधस्तनतः क्रिया
सोऽधस्तनः स्वपङ्क्तिस्थविधिमेवं प्रवर्तयेत् ३९७
शेषाङ्काश्रितपङ्क्त्यङ्काभावे तु लघवो मताः
अधस्तनश्रेणिसंख्या नष्टस्यैष विधिः स्मृतः २९८
इति लघुमेर्नष्टम् ।
इति लघुमेरुपरपङ्क्तिनष्टम्
गुरुमेरोरधःपङ्क्तौ नष्टं सकलनष्टवत्
प्लुतलाभस्तु गुरुवत्
इति गुरुमेर्वधःपङ्क्तिनष्टम्
परपङ्क्तिष्वथोच्यते ३९९
तृतीयाधस्तनस्थाने तृतीयोऽङ्कोऽत्र पात्यते
स्थाने तु पञ्चमस्याधः पञ्चमो लघुवद्गुरौ

लब्धेऽधोव्रजनं शेषाल्लघुवद्गुरुलम्भनम्  ४००
लघुमेरुवदन्यत्तु नष्टे स्यात्परपङ्क्तिषु  ४०१
इति गुरुमेरुनष्टम्
इति गुरुमेरुपरपङ्क्तिनष्टम्
समस्तनष्टवन्नष्टं प्लुतमेरावुदाहृतम्
विशेषः कथ्यते त्वेष द्वितीयादिषु पङ्क्तिषु  ४०२
अधो गच्छेत्प्लुते पूर्णे गुरुमेरौ गुराविव
द्रुतो लघुर्गुरुर्वाऽन्त्यैरङ्कैर्लब्धः प्लुती भवेत्  ४०३
तदङ्काधस्तनैः सार्धमङ्कषट्कमतीत्य च
अधःपङ्क्तौ स्थितैरङ्कैः शेषैरेष पुनर्विधिः
पङ्क्तौ तु प्लुतहीनायां नान्तिमः प्लुततां व्रजेत्  ४०४
इति प्लुतमेरुनष्टम्  ।
इति प्लुतमेरुपर्पङ्क्तिनष्टम्
सर्वोद्दिष्टवदुद्दिष्टं लघुमेर्वादिषु त्रिषु  ४०५
इति लघुमेर्वादिमेरुत्रयोद्दिष्टम्
इति
श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोढलदेवनन्दननिःशङ्कश्रीशार्ङ्गदेवविरचिते संगीतरत्नाकरे पञ्चमस्तालाध्यायः समाप्तः  ५

अथ षष्ठो वाद्याध्यायः  ।
ततं येनावनद्धं च भुवनं निजमायया
आनन्दघनमध्येमि तं ब्रह्मसुषिरे हरम्  १
चित्रा वाचः प्रवर्तन्ते धातुवृत्तिविचित्रिताः
यतस्तं नौमि विस्तारतत्त्वौघानुगतं शिवम्  २
गीतं चतुर्विधाद्वाद्याज्जायते चोपरज्यते
मीयते च ततोऽस्माभिर्वाद्यमद्य निगद्यते
तत्ततं सुषिरं चावनद्धं घनमिति स्मृतम्  ३
चतुर्धा तत्र पूर्वाभ्यां श्रुत्यादिद्वारतो भवेत्
गीतं ततोऽवनद्धेन रज्यते मीयते घनात्  ४

वाद्यतन्त्री ततं वाद्यं सुषिरं सुषिरं मतम् ५
चर्मावनद्धवदनमवनद्धं तु वाद्यते
धनो मूर्तिः साऽभिघाताद्वाद्यते यत्र तद्धनम् ६
ततं वीणा द्विधा सा च श्रुतिस्वरविवेचनात्
तत्र श्रीशार्ङ्गदेवेन श्रुतिवीणोदिता पुरा ७
वक्ष्यते स्वरवीणाऽत्र तस्यामपि विचक्षणाः
अङ्कित्वा स्वरदेशानां भागानुभिन्दते श्रुतीः ८
तद्भेदास्त्वेकतन्त्री स्यान्नकुलश्च त्रितन्त्रिका
चित्रा वीणा विपञ्ची च ततः स्यान्मत्तकोकिला ९
आलापिनी किंनरी च पिनाकीसंज्ञिता परा
निःशङ्कवीणेत्याद्याश्च शार्ङ्गदेवेन कीर्तिताः १०
वंशः पावः पाविका च मुरली मधुकर्यपि
काहलातुण्डुकिन्यौ च चुक्का शृङ्गमतः परम् ११
शङ्खादयश्च वाद्यस्य सुषिरस्य भिदा मताः
पटहो मर्दलश्चाथ हुडुक्का करटा घटः १२
घडसो ढवसो ढक्का कुडुक्का कुडुषा तथा
रुञ्जा डमरुको डक्का मण्डिडक्का च डक्कुली १३
सेल्लुका झल्लरी भाणस्त्रिवली दुन्दुभिस्तथा
भेरीनिःसाणतुम्बक्यो भेदाः स्युरवनद्धगाः १४
तालोऽथ कांस्यतालः स्याद्धण्टा च क्षुद्रघण्टिका
जयघण्टा ततः केस्त्रा शुक्तिपट्टादयस्तथा
प्रभेदा घनवाद्यस्य प्रोक्ताः सोढलसूनुना १५
शुष्कं गीतानुगं नृत्तानुगमन्यद्द्वयानुगम्
चतुर्धेति मतं वाद्यं तत्र शुष्कं तदुच्यते १६
यद्विना गीतनृत्याभ्यां तद्गोष्ठीत्युच्यते बुधैः
ततः परं तु त्रितयं भवेदन्वर्थनामकम् १७
वाद्यं दक्षाध्वरध्वंसोद्वेगत्यागाय शंभुना
चक्रे कौतुकतो नन्दिस्वातितुम्बुरुनारदैः १८
अभिषेके नरेन्द्राणां यात्रायामुत्सवे तथा १९

मङ्गलेषु च सर्वेषु विवाहोपनयादिषु
उत्पाते संभ्रमे युद्धे नाटके वीररौद्रिणि २०
सर्वातोद्यानि वाद्यन्ते कानिचित्त्वल्पमङ्गले
विश्रान्तौ रङ्गसंस्थानां गायतां नृत्यतामपि २१
एतान्युत्साहकारीणि वीराणां मङ्गलाय च
कुर्वन्ति हृदयस्फूर्तिं दुःखमुन्मूलयन्ति च २२
गीतनृत्यगतन्यूनप्रच्छादनपटून्यपि
वाद्यान्यतस्ततादीनि तत्राऽऽदौ ब्रूमहे ततम् २३
तस्य वादनभेदांश्च विविधाः करसारणाः
सुषिरं पटहं तस्य पाटांस्तद्रचनास्तथा २४
पाटप्रभववाद्यानि प्रबन्धान्वाद्यसंश्रयान्
मर्दलाख्यं ततो वाद्यं भेदान्मार्दलिकस्य च २५
गुणदोषांश्च तद्वृन्दं स्वरूपस्य च लक्षणम्
हुडुक्काद्यवनद्धानां स्वस्वपाटसमन्वितम् २६
घनस्य च गुणान्दोषान्वाद्यवादकसंगतान्
हस्तयोश्च गुणानत्र वाद्याध्याये यथाक्रमम् २७
अङ्गुष्ठपर्वदैर्घ्यं स्यादङ्गुलं द्वादशाङ्गुलम्
वितस्तिस्तद्द्वयं हस्तो वाद्यभाण्डमितौ भवेत् २८
ग्रन्थिव्रणभिदा हीनः श्लक्ष्णः खदिरदारुजः
सुवृत्तः सरलो दण्डो वितस्तिपरिधिर्भवेत् २९
त्रिहस्तदैर्घ्यस्तावच्च सुषिरं दधदन्तरा
सार्धाङ्गुलपरीणाहमूर्ध्वाधोवदने तथा ३०
कनिष्ठाङ्गुलिमानं वा गर्भे रन्ध्रत्रयं दधत्
त्रेताग्निसंस्थितं यद्वा द्वे रन्ध्रे तर्जनीमिते ३१
एकमेव त्वधःशङ्कुस्थाने सार्धाङ्गुलायतम्
दधानः ककुभं सारं खादिरं वाऽन्यदारुजम् ३२
तिर्यक्संस्थेन दैर्घ्येणाष्टाङ्गुलत्र्यङ्गुलायतम्
अङ्गुलाधिकपार्श्वं च मध्ये कूर्मोन्नताकृतौ ३३
स्थितेन पत्रिकाधारगर्तेन च समन्वितम्

गर्तमध्ये च रन्ध्रेण योन्याकारेण संयुतम्  ३४
रन्ध्रे तत्र निविष्टेन रन्ध्रस्थौल्येन शङ्कुना
अन्वितां पत्रिकां मिश्रलोहजां द्व्यङ्गुलायताम्  ३५
चतुरङ्गुलदैर्घ्यां च मध्ये कूर्मोन्नताद्बहिः
निम्नमध्यं मनागन्तर्धारयन्तमधः पुनः  ३६
द्विदण्डकं शङ्कुनाऽष्टाङ्गुलदैर्घ्ययुजा तथा
वृत्तेन त्र्यङ्गुलस्थूलोत्तरार्धश्लक्ष्णमूर्तिना  ३७
कूर्मपृष्ठोन्नतं मध्यमुत्तरार्धस्य बिभ्रता
दण्डवत्क्रमितस्थौल्याधरभागयुतेन च  ३८
दण्डवक्त्रप्रविष्टाधोभागेन च विराजितम्
एवंविधस्य दण्डस्योर्ध्वाधः सप्तदशाङ्गुलैः  ३९
अधोभागेऽक्षिसदृशं विधाय विवरद्वयम्
एकत्र द्विगुणां तन्त्रीं क्षिप्त्वा रन्ध्रे परत्र च  ४०
तन्त्रीप्रान्तान्तरे क्षिप्त्वा प्रोतं तद्द्विगुणे ततः
द्विगुणात्कर्षणात्कर्षेत्पुनरेवं समाचरेत्  ४१
षष्ट्यङ्गुलपरीणाहं सुपक्वं वर्तुलं च यत्
तुम्बस्योत्सेधतस्तस्य वदनं द्वादशाङ्गुलम्  ४२
वृत्तस्थानस्थया नाभ्याऽधोमुख्या मध्यरन्ध्रया
त्र्यङ्गुलायतया युक्तं पृष्ठसंश्लिष्टपृष्ठया  ४३
तुम्बकं मध्यरन्ध्रं स्यात्कर्परं नालिकेरजम्
अन्तस्थरन्ध्रसंलग्नं पृष्ठमध्येन रन्ध्रिणा  ४४
तं दधद्रन्ध्रमध्येऽथ तन्त्रीप्रान्तौ निवेश्य तौ
संवेष्ट्य कीलकेऽन्तस्थे कीलकं भ्रामयेन्मुहुः  ४५
तावद्यावद्दृढो बन्धस्तुम्बकस्यैव जायते
एवं तुम्बकमुत्तानं दण्डे तज्ज्ञैर्निबध्यते  ४६
दोरकं नागपाशेन द्विगुणेनान्वितं ततः
सुबलश्लक्ष्णसूत्रोत्थं दण्डे तुम्बोर्ध्वदेशतः  ४७
संवेष्ट्य नागपाशेऽस्मिन्बद्धप्रान्तां दृढां घनाम्
श्लक्ष्णां स्नायुमयीं तन्त्रीं कृष्ट्वा संपीड्य पत्रिकाम्  ४८

तन्त्र्या संवेष्ट्य ककुभं निबध्नीयाद्दृढं ततः
वैणवी यवविस्तारा तन्वी द्व्यङ्गुलदैर्घ्यभाक् ४९
तन्त्रीपत्रिकयोरन्तर्जीवा नादस्य सिद्धये
संदिग्धपत्रिका तन्त्री श्लेषं क्षेप्या कलावता ५०
या पक्ववेणुवल्कोत्था दोरिका त्रिवृता शुभा
कनिष्ठा नखविस्तारा द्वादशाङ्गुलदैर्घ्यभाक् ५१
सुवृत्ता मसृणा तुम्बादधस्तादङ्गुलत्रये
दण्डे संवेष्टयेन्मन्द्रस्वरस्थानोपलक्षिकाम् ५२
यत्राभिदधिरे धीरास्तां वीणामेकतन्त्रिकाम्
प्रकृतिः सर्ववीणानामेषा श्रीशार्ङ्गिणोदिता ५३
दर्शनस्पर्शने चास्या भोगस्वर्गापवर्गदे
पुनीतो विप्रहत्यादिपातकैः पतितं जनम् ५४
दण्डः शंभुरुमा तन्त्री ककुभः कमलापतिः
इन्दिरा पत्रिका ब्रह्मा तुम्बं नाभिः सरस्वती ५५
दोरको वासुकिर्जीवा सुधांशुर्दोरिका रविः
सर्वदेवमयी तस्माद्वीणेयं सर्वमङ्गला ५६
अधस्तुम्बमधोवक्त्रमूर्ध्वं तन्त्रीर्यथा भवेत्
तथाऽस्या द्दोरिकादेशं वामस्कन्धे निधाय च ५७
ककुभं दक्षिणस्याङ्घ्रेः पाष्णर्या संधाय यत्नतः
न्यस्तां पृष्ठे कनिष्ठाया वामहस्तस्य कम्रिकाम् ५८
सारणासारणेत्युक्तामनामाङ्गुलिवेष्टिताम्
आकुञ्चन्मध्यमापार्श्वलग्नां तर्जनिकाग्रतः ५९
निपीड्योरःस्थलासन्नां तन्त्रीमधिनिधाय च
ऊर्ध्वाधः सारयेन्नादसिद्ध्यै हस्तं तु दक्षिणम् ६०
त्यक्त्वा वितस्तिं जीवातस्तन्त्र्यां विन्यस्य सारयेत्
अन्यत्रोपरिवाद्यान्तं नोर्ध्वं वक्षःस्थलान्नयेत् ६१
कम्रिका तत्क्रिया चोक्ता सारणा सा चतुर्विधा
उत्क्षिप्ता संनिविष्टाख्योभयी स्यात्कम्पितेत्यपि ६२
श्लिष्टा तन्त्री यदोत्प्लुत्य निपतेत्सारणां मुहुः

तदोत्क्षिप्ता संनिविष्टा स्पृष्टैव सरने भवेत् ६३
क्रमादेतद्द्वयाभ्यां स्यादुभयी सारणा मता
स्वरस्थाने कम्पनेन कम्पिता कम्रिकोच्यते ६४
घातः पातश्च संलेखस्ततो लेखावलेखकौ
भ्रमरः संधितच्छिन्नौ नवमी नखकर्तरी ६५
व्यापारा दक्षिणस्येति पाणेर्वामस्य तु द्वयम्
स्फुरितः खसितश्चेति करयोरुभयोस्त्वमी ६६
घोषो रेफोऽथ बिन्दुः स्यात्कर्तरी चार्धकर्तरी
निष्कोटिताख्यः स्खलितः शुकवक्त्रश्च मूर्छना ६७
तलहस्तोऽर्धचन्द्रश्च प्रसारः कुहरोऽपरः
त्रयोदशेति सर्वेऽमी स्युश्चतुर्विंशतिर्युताः ६८
करनामान्यपीमानि मन्वते वाद्यवेदिनः
घातः स्यान्मध्यमाक्रान्ततर्जन्या तन्त्रिकाहतिः ६९
इति घातः
घातः केवलया पातः
इति पातः
संलेखोऽन्तस्तथाऽऽहतिः
इति संलेखः
अन्तर्मध्यमया घातमुल्लेखं संप्रचक्षिरे ७०
इत्युल्लेखः
अवलेखो मध्यमया स्यात्तन्त्रीताडनं बहिः
अङ्गुल्याऽन्येऽन्ययाऽप्याहुः संलेखं चावलेखकम् ७१
सर्वाभिस्तिसृभिर्द्वाभ्यामथवेति च ते जगुः
अन्तर्बहिर्मुखौ घातौ तयोस्ते ब्रुवते क्रमात् ७२
इत्यवलेखः
भ्रमरोऽन्तःक्रमाच्छीघ्रं चतुरङ्गुलिताडनम्
इति भ्रमरः
मध्यमानामिकाभ्यां तु बहिर्घातोऽत्र संधितः ७३
इति संधितः

तर्जनीपार्श्वलग्नायास्तन्त्र्या बहिरनामया
हननं छिन्नमाचष्टे श्रीमत्सोढलनन्दनः ७४
इति च्छिन्नः
क्रमाद्द्रुतं नखैर्घातश्चतुर्भिर्नखकर्तरी
इति नखकर्तरी
इति नव दक्षिणहस्तव्यापाराः
स्फुरिते कम्पिता तन्त्रीः पृष्ठलग्नेव सारणाः ७५
इति स्फुरितः ।
मुहुः सारणया तन्त्रीघर्षणं खशितो मतः
इति खशितः
इति वामहस्तव्यापारद्वयम्
तन्त्री लग्नाङ्गुष्ठपार्श्वा कर्तरीवच्च हन्यते ७६
कनिष्ठासारणाभ्यां वा यत्रासौ घोष उच्यते
इति घोषः
दक्षिणानामया यत्र तन्त्रीरन्तर्निहन्यते
वामस्य मध्यमाङ्गुल्या बहिस्तं रेफमूचिरे ७७
इति रेफः
अनामया बहिस्तन्त्रीघाताज्जातो यदा ध्वनिः
तर्जन्या धार्यते बिन्दुर्निःशङ्केनोदितस्तदा ७८
इति बिन्दुः
अङ्गुलीभिश्चतसृभिः क्रमेण करयोर्द्वयोः
बहिस्तन्त्रीहतिस्तूर्णं कर्तरी कीर्तिता बुधैः ७९
इति कर्तरी
दक्षिणः कर्तरीं कुर्याद्वामहस्तस्तु तन्त्रिकाम्
यत्र सारणया हन्ति प्राहुस्तामर्धकर्तरीम् ८०
इत्यर्धकर्तरी
उत्सृष्टसारणा यत्र हनित् तन्त्रीं प्रदेशिनी
निष्कोटिताभिधं पाणिममुं वाद्यविदो विदुः ८१
इति निष्कोटितः

उत्क्षिप्तया सारणया वामस्तन्त्रीं द्रुतं यदा
निहन्ति कर्तरीतुल्यो दक्षिणः स्खलितस्तदा ८२
इति स्खलितः
तन्त्रीकर्षोऽङ्गुष्ठतर्जन्यग्राभ्यां शुकवक्त्रकः ८३
इति शुकवक्त्रः
उद्वेष्टपरिवर्ताभ्यां तन्त्र्यां भ्राम्यति दक्षिणे
स्वरस्थाने द्रुतं कम्प्रासारणं मूर्छना मता ८४
इति मूर्छना
तलेन दक्षिणो हस्तस्तन्त्रीं हन्तीतरः युनः
प्रदेशिन्या स्पृशेद्यत्र तलहस्तो भवेदसौ ८५
इति तलहस्तः
स्पर्शोऽङ्गुष्ठकनिष्ठाभ्यामर्धचन्द्रोऽभिधीयते
इत्यर्धचन्द्रः
चतुरङ्गुलिसंघाते कुञ्चिताङ्गुष्ठके तले
कनिष्ठातर्जनीपार्श्वस्पर्शस्तन्त्र्याः प्रसारकः ८६
इति प्रसारकः
करस्य किंचित्साङ्गुष्ठसकलाङ्गुलिकुञ्चने
कनिष्ठाङ्गुष्ठसंस्पर्शस्तन्त्र्याः स्यात्कुहरः करः ८७
इति कुहरः
इति त्रयोदशोभयहस्तव्यापाराः ।
एतद्धस्तसमायोगाद्वादनं वाद्यमुच्यते
छन्दो धारा कैकुटी च कङ्कालं वस्तु च द्रुतम् ८८
गजलीलं दण्डकं चोपरिवाद्यमतः परम्
वाद्यं पक्षिरुतं चेति दशधा परिकीर्तितम् ८९
खसितस्फुरितौ यत्र क्रियेते बहुधा करौ
तारं च स्पृश्यते स स्याच्छन्दो यतिमनोहरः ९०
इति च्छन्दः
स्खलितो मूर्छना चाथ कर्तरीरेफसंयुतौ
उल्लेखरेफौ यत्राऽऽस्तां धारां ब्रूते हरप्रियः ९१

इति धारा
शुकवक्त्रः स्फुरितको घोषः स्यादर्धकर्तरी
क्रमादेते करा यत्र तामाहुः कैकुटीं बुधाः ९२
इति कैकुटी
स्फुरितैर्मूर्छनासंज्ञैः कर्तरीत्रितयेन च
युक्तं करैः क्रमादेभिः कङ्कालं कथितं बुधैः ९३
इति कङ्कालम्
स्पृष्टतारमुपेतं यत्कर्तर्या खसितेन च
कुहरेणाथ तद्वाद्यं वस्तु वस्तुविदो विदुः ९३
इति वस्तु
कर्तरीखसितौ यत्र क्रमेण कुहरः करः
रेफभ्रमरघोषाश्च तद्द्रुतं ब्रुवते बुधाः ९४
इति द्रुतम्
बहुधा मूर्छना हस्ताः स्फुरिताः कर्तरी ततः
खसितो यत्र तत्प्राहुर्गजलीलं कलाविदः ९५
इति गजलीलम्
स्वलितो मूर्छनाख्यश्च कर्तरीरेफसंयुतः
खसितो मूर्छनाख्यश्च कर्तरीरेफसंयुतः
खसितो यत्र वाद्यज्ञा दण्डकं तद्बभाषिरे ९६
इति दण्डकम्
ऊर्ध्वाधोगौ क्रमाद्धस्तौ रेफकर्तरिकाह्वयौ
निष्कोटिते तले हस्ते द्वावप्युपरिवाद्यके ९७
इत्युपरिवाद्यकम्
समस्तहस्तवाद्यं तु वाद्यं पक्षिरुतं मतम्
इति पक्षिरुतम्
इति दशविधं वाद्यम्
सकलं निष्कलं चेति द्विविधं वाद्यमुच्यते ९८
तन्त्रीसंलग्नजीवातः स्थूलो यत्र ध्वनिर्भवेत्
तदुक्तं सकलं वाद्यमपरे त्वन्यथा जगुः ९९

आदोरिकं पत्रिकं चेत्तर्जनीस्पर्शवर्जितम्
सार्यते कम्रिकावाद्यं तदाहुः सकलाभिधम् १००
अपनीय कलां कम्रामधो नैषाददेशतः
न नयेत्तर्जनीस्पर्शं तन्त्रयाश्चेन्निष्कलं तदा १०१
सूक्ष्मश्चात्र भवेन्नादः सारणामत्र केचन
आमध्यमस्वरस्थानं सारणायां प्रपेदिरे १०२
अवोचदिति निःशङ्कः शिष्याभ्यासाय वादनम्
श्रुत्यादिक्रमतो गीतनिष्पत्तौ त्विदमादिशेत् १०३
वक्ष्यामः स्वररन्ध्राणां यद्वंशेऽष्टादशाङ्गुले
प्रथमे सप्तके स्थानं वीणायामपि तन्मतम् १०४
स्वराणां किंतु वैणानामधराधरतारता
मध्यमे सप्तके स्थानं ततः स्याद्द्विगुणान्तरम् १०५
तृतीये सप्तके स्थानं ततोऽपि द्विगुणान्तरम्
अङ्केत च स्वरस्थानान्यमूनि सुखबुद्धये १०६
यथास्वं स्वरभेदानां विभागाच्छ्रुतिदेशधीः
स्याद्ग्राममूर्छनादीनामुद्बोधः सुकरस्ततः
एषा पिञ्जरकाः प्रोक्ता घोषकश्चैकतन्त्रिका १०७
इत्येकतन्त्रीलक्षणम्
तन्त्रीद्वयेन नकुलः स्यादन्वर्था त्रितन्त्रिका
तन्त्रीभिः सप्तभिश्चित्रा विपञ्ची नवभिर्मता १०८
कोणाङ्गुलीवादनीया चित्रा तद्वद्विपञ्चिका
क्रमादन्येऽङ्गुलीकोणव्यवस्थामूचिरे तयोः १०९
चित्रायामङ्गुलीमात्रं विपञ्चयामुभयं परे
तन्त्रीणामेकविंशत्या कीर्तिता मत्तकोकिला ११०
मुख्येयं सर्ववीणानां त्रिस्थानैः सप्तभिः स्वरैः
संपन्नत्वात्तदन्यास्तु तस्याः प्रत्यङ्गमीरिताः
करणैश्चित्रयन्त्यस्तास्तस्याः स्युरुपरञ्जिकाः १११
रूपं कृतप्रतिकृतं प्रतिभेदस्ततः परम्
स्याद्रूपशेषमोघश्च प्रतिशुष्केति षड्विधम्

करणं तस्य वक्ष्यामि लक्ष्मोदाहरणैः समम्  ११२
मुख्यवीणाप्रयुक्तस्य गुर्वादेर्भञ्जनेन यत्
युगपद्वादनं रूपं विपञ्चयादिषु तद्यथा  ११३
वाद्यते गुरुमुख्यायां यदा द्वे लघुनी तदा
विपञ्चयादौ यदा त्वस्यां लस्तदन्यासु दद्वयम्  ११४
इति रूपम्
एतत्कृतप्रतिकृतं पश्चात्प्रत्यङ्गवादने
इति कृतप्रतिकृतम्
रूपक्रियाविपर्यासात्प्रतिभेदो भवेद्यथा  ११५
वाद्यते लद्वयं तज्ज्ञैर्मत्तकोकिलया यदा
गुरुस्तदा विपञ्चयादिवीणाभिरिति तद्विधिः  ११६
इति प्रतिभेदः
यदा विदारीविच्छेदं कुरुते मुख्यवैणिकः
तदाऽन्यासां वादनं यद्रूपशेषं तदुच्यते  ११७
इति रूपशेषम्
यदा विलम्बितलयं प्रयुङ्क्ते मुख्यवैणिकः
तदैवातिद्रुतलयं करचातुर्ययोगतः
वैपञ्चिकाद्याः कुर्युश्चेदोघमाचक्षते तदा  ११८
इत्योघः
अंशसंवाद्यन्यतरस्वरव्यञ्जिकया यदा  ११९
तन्त्र्यैकयैव करणं स्यान्मुख्यामुख्यवीणयोः
प्रतिशुष्कां तदाऽऽचष्टशार्ङ्गिदेवो विदांवरः  १२०
इति प्रतिशुष्का
पुष्णन्ति वीणावाद्यं ये रक्तिं दधति चातुलाम्
कुर्वन्त्यदृष्टपुष्टिं च तान्धातूनधुना ब्रुवे  १२१
ये प्रहारविशेषोत्थाः स्वरास्ते धातवो मताः
विस्तारकरणा विद्धव्यञ्जनाश्चेति धातवः  १२२
चतुर्धा तेषु विस्तारश्चतुर्धा बोधितो बुधैः
विस्तारजश्च संघातजोऽथ स्यात्समवायजः  १२३

अनुबन्धश्चेति चतुर्भेदः संघातजो भवेत्
द्विरुत्तरो द्विरधरोऽप्यधराद्युत्तरान्तकः १२४
उत्तराद्यधरान्तश्चेत्यष्टधा समवायजः
त्रिरुत्तरस्त्रिरधरोऽथ द्विरुत्तरपूर्वकः १२५
अधरान्तो द्विरधरोत्तरान्तश्चोत्तरादिकान्
परो द्विरधरोऽथ स्यादधरादिर्द्विरुत्तरः १२६
मध्योत्तरद्विरधरोऽधरमध्यद्विरुत्तरः
एवं चतुर्दशविधो विस्तारः शार्ङ्गिणोदितः १२७
करणस्य तु भेदाः स्यू रिभितोच्चयसंज्ञकौ
तथा नीरटितो ह्रादोऽनुबन्ध इति पञ्च ते १२८
क्षेपः प्लुतोऽतिपातश्चातिकीर्णोऽप्यनुबन्धकः
इत्याविद्धे पञ्च भेदा दश तु व्यञ्जने मताः १२९
पुष्पं कलं तलं बिन्दू रेफो निस्वनितं ततः
निष्कोटितमथोन्मृष्टमवमृष्टनिबन्धनौ
इति सर्वे चतुस्त्रिंशन्मिलिता धातवो मताः १३०
विस्तीर्णनादभेदत्वाद्विस्तारो धातुरुच्यते
प्रहारलाघवात्कृत्वा स्वरान्ति स्वरो विस्तारजो भवेत्
एकविस्तारसंज्ञं तमपरे सूरयो जगुः १३२
अलंकारत्वमप्यस्य निःशङ्को निरदीधरत् १३३
इति विस्तारजः
अत्रोत्तराधरौ ज्ञेयौ मन्द्रतारौ स्वरौ क्रमात्
उत्तराधरघातौ हि तयोर्निष्पादकाविह १३४
संघातेज ये चत्वारस्तथाऽष्टौ समवायजे
भेदास्तेऽन्वर्थनामानस्तल्लक्ष्मोक्तिरनर्थिका १३५
तथाऽपि वालबोधाय तान्वयं विवृणीमहे
मन्द्रस्वरद्विरुच्चाराद्धातुरत्र द्विरुत्तरः १२६
इति द्विरुत्तरः
तारस्थाने द्विराघाताद्धातुर्द्विरधरो भवेत्
इति द्विरधरः

यस्त्वादितारो मन्द्रान्तः सोऽधराद्युत्तरान्तकः १३७
इत्यधराद्युत्तरान्तकः
आदौ मन्द्रस्ततस्तार उत्तराद्यधरान्तके
इत्युत्तराद्यधरान्तकः
एते संघातजे भेदा द्विःप्रहारभवे मताः १३८
इति संघातजस्य भेदचतुष्टयम्
मन्द्रस्वरत्रिराघाताद्धातुमाहुस्त्रिरुत्तरम्
इति त्रिरुत्तरः
त्रिस्तारस्वरघातेन धातुस्त्रिरधरो भवेत् १३९
इति त्रिरधरः
द्विरुत्तराधरान्तो द्विर्मन्द्रस्तारान्तगो भवेत्
इति द्विरुत्तराधरान्तः
तारस्थानं द्विः प्रहृत्य विदध्यान्मन्द्रमन्ततः १४०। तदा द्विरधरोत्तरान्तो धातुरुच्यते
इति द्विरधरोत्तरान्तः
उत्तरादिद्विरधरे मन्द्रतारो द्विरिष्यते १४१
इत्युत्तरादिद्विरधरः
सकृत्तारोऽथ मन्द्रो द्विरधरादिद्विरुत्तरे
इत्यधरादिद्विरुत्तरः
मध्योत्तरद्विरधरे तारौ मध्यस्थमन्द्रकौ १४२
इति मध्योत्तरद्विरधरः
मन्द्राद्यन्तो भवेत्तारोऽधरमध्यद्विरुत्तरे
इत्यधरमध्यद्विरुत्तरः
त्रिप्रहारभवे भेदाः स्युरिमे समवायजे १४३
इत्यष्टौ समवायजभेदाः
सजातीयविजातीयभेदसंमिश्रणोद्भवः
अनुबन्धाभिधो धातुः शार्ङ्गदेवेन कीर्तितः १४४
इत्यनुबन्धः
इति चतुर्दश विस्तारधातुभेदाः

लघुगुर्वात्मकैर्घातैः करणाविद्धयोः क्रियाः
करणेऽल्पगुरुस्तत्र तद्भेदाल्लँक्षयेऽधुना १४५
रिभितो द्वौ लघू गान्तौ
इति रिभितः ।
चतुर्लान्गगुरूच्चयः
इत्युच्चयः
षड्लोऽन्तगुर्नीरटितः
इति नीरटितः
ह्रादोऽष्टलघुरन्तगः १४६
इति ह्रादः
करणस्यानुबन्धस्तु स्याद्विस्तारानुबन्धवत् १४७
इत्यनुबन्धः
भूरिगुर्गुरुहीनो वाऽऽविद्धोऽस्य विवृणे भिदाः
क्षेषो लघुगुरुभ्यां स्यात्
इति क्षेपः
प्लुतो लघुगुरुर्भवेत् १४८
इति प्लुतः
अतिपातो लगाभ्यां द्विः
इत्यतिपातः
चतुर्वारं लगौ ततः
लघुर्यत्रातिकीर्णोऽसौ
इत्यतिकीर्णः
अनुबन्धस्तु पूर्ववत् १४९
इत्यनुबन्धः
द्वाभ्यां त्रिभिश्चतुर्भिश्च नवभिर्लघुभिः क्रमात्
क्षेपादयोऽत्र चत्वारो भवन्तीत्यपरेऽब्रुवन् १५०
इति पञ्चाऽऽविद्धधातुभेदाः
अङ्गुलीभेदमात्रेण व्यञ्जनस्तद्भिदा ब्रुवे १५१
अङ्गुष्ठाभ्यां कनीयस्या तन्त्रीरेका निहन्यते

युगपद्यत्र तत्पुष्पमभिलेखुः पुरातनाः १५२
इति पुष्पम्
एकस्वरं यदा नानास्थानकं तन्त्रिकाद्वयम्
अङ्गुष्ठाभ्यामेककाले निहन्ति स्यात्कलं तदा १५३
इति कलम्
दक्षिणाङ्गुष्ठतो हन्ति वामाङ्गुष्ठनिपीडिताम्
तन्त्रीं यत्र तदाऽऽचष्ट तलं सोढलनन्दनः १५४
इति तलम्
बिन्दुरेकत्र तन्त्र्यां स्यात्प्रहारो गुरुनादकृत्
इति बिन्दुः
रेफस्त्वेकस्वरो घातः क्रमात्सर्वाङ्गुलीकृतः १५५
इति रेफः
तलं कृत्वाऽवरोहेण घातो निस्वनितं मतम्
इति निस्वनितम्
वामाङ्गुष्ठेन तूर्ध्वाधोघातो निष्कोटितं मतम् १५६
इति निष्कोटितम्
घातोऽतिमधुरध्वानस्तर्जन्योन्मृष्टमुच्यते
इत्युन्मृष्टम्
कनिष्ठया दक्षिणयाऽङ्गुष्ठाभ्यामप्यधः सरन् १५७
हन्ति त्रिस्थानकं तन्त्रीत्रयमेकस्वरं पृथक्
यत्रावमृष्टमाचष्ट तद्यज्ञपुरमण्डनः १५८
उक्तानुबन्धवद्बोध्यमनुबन्धस्य लक्षणम्
नन्वेकलक्ष्मभेदोऽयं गण्यते किं पृथक् पृथक् १५९
मैवं तद्धातुभेदानां बाहुल्यं यत्र दृश्यते
विशिष्टो धातुना तेन सोऽनुबन्धो भिदां व्रजेत् १६०
इत्यनुबन्धः
इत्येते धातवः प्रोक्ताः सर्ववाद्योपयोगिनः
यथास्थानं प्रयोक्तव्यास्ते च वृत्तिसमाश्रयाः १६१
तत्र जातिरुदात्ता स्याद्विस्तारे करुणे घना

ग्राविद्धधातौ रिभिता व्यञ्जने ललिता मता १६२
इति चतुस्त्रिंशद्धातवः
वृत्तिर्गुणप्रधानत्वरूपा व्यवहृतिर्मता
चित्रा वृत्तिर्दक्षिणा च तिस्रः स्युरिति वृत्तयः १६३
चित्रा वाद्यप्रधानत्वं गीतस्य गुणतोच्यते
उभयोः समभावेन वृत्तिर्वृत्तिरुदाहृता
गीतप्रधानतावाद्यगुणता दक्षिणा मता १६४
द्रुतादिकाल्लँयानासां नियच्छन्ति क्रमात्परे
समां स्रोतोगतां तद्वद्गोपुच्छां च यतिं क्रमात् १६५
मागधीं संभाविताख्यां गीतिं च पृथुलां क्रमात्
ग्रोघं चानुगतं तत्त्वं वाद्यान्येतान्यनुक्रमात् १६६
मार्गं चित्रं वार्तिकाख्यं दक्षिणाख्यं यथाक्रमम्
ग्रनागतसमातीतान्प्रहानिह च मन्वते १६७
इति वृत्तित्रयम्
तत्त्वं भवेदनुगतमोघश्चेति निरूपितम्
गीतानुगं त्रिप्रकारं वाद्यं तल्लक्ष्म कथ्यते १६८
लयं तालं विरामं च यतिं गीतिं तथाऽक्षरम्
वर्णग्रामविभागं च नानाजात्यंशकादिकम् १६९
व्यञ्जद्गीतगतं गीतमिलितं तत्त्वमुच्यते
इति तत्त्वम्
किंचिद्गीतानुहरणाद्वाद्यं त्वनुगतं मतम् १७०
यथा विरतिरन्यत्र स्थितिः स्थानान्तरेष्वपि
विलम्बिते गीतलये वैदग्ध्याद्द्रुतवादनम् १७१
इत्यनुगतम्
गीतस्यान्तेऽनुकर्ताऽपि भागशश्चातुरीयशात्
निरन्तरैः पाणिघातैः समुदायानुकारितम्
वादको दर्शयेद्वाद्ये यत्रौघं तं प्रचक्षते १७२
इत्योघः
एकविंशतितन्त्रीस्थमेतद्धात्वादिवादनम्

एकतन्त्र्यादिवीणासु यथायोगं प्रवर्तयेत् १७३
एकतन्त्र्यां च यत्प्रोक्तं तज्ज्ञेयं नकुलादिषु
वेणावपि तदिच्छन्ति वेणुप्रावीण्यशालिनः १७३
इति गीतानुगे वाद्यम्
भेदान्निर्गीतवाद्यस्य वैणस्याथ प्रचक्ष्महे १७५
आश्रावणाऽऽरम्भविधिर्वक्त्रपाणिस्ततः परम्
संखोटना चतुर्थी च पञ्चमी परिघट्टना १७६
मार्गासारितकं लीलाकृतमासारितत्रयम्
दशेति शुष्कवाद्यानि तल्लक्ष्म व्याहरेऽधुना १७७
विस्तारधातुभेदानामादिमं द्विः प्रयुज्यते
द्वितीयं च प्रयुज्य द्विराद्यं भेदं द्वितीयकम् १७८
लीनाकृतिं द्विरुच्चार्य तद्वद्युग्मान्तराण्यपि
प्राक्प्राग्युग्मोत्तरादीनि प्रयुञ्जीत तदा भवेत् १७९
आश्रावणं शुष्कवाद्यमत्र त्वाह विशाखिलः
विस्तारधातुभेदानां प्रयोगे द्रुतरूपताम् १८०
आद्यखण्डे यदाऽऽद्यौ द्वावेकादशचतुर्दशौ
वर्णः पञ्चदशस्तद्वच्चतुर्विंशो गुरुर्भवेत् १८१
लघवोऽष्टादशान्ये स्युरेवं खण्डे द्वितीयके १८२
तृतीये तु तृतीयो गोऽष्टमपञ्चदशौ तथा
शेषा द्वादश लाः खण्डैस्त्रिभिरेवं ध्रुवा भवेत्
आश्रावणायां गेया सा सूरिभिः सिद्धिमीसुभिः १८३
वक्ष्यामहे मुनिमतादस्यां पातकलाविधिम्
द्वाविंशतिः कला केचित्केऽप्यष्टाविंशतिः कलाः १८४
अन्ये द्वात्रिंशतिं प्राहुस्तत्रैवं तालयोजना १८५
शम्यात्रयं ततस्तालास्त्रयोऽत्रानागतग्रहे
ततः समग्रहे शम्पाद्वयं तालद्वयं तथा १८६
ततोऽतीतग्रहे शम्पातालौ द्वादश ताः कलाः
यथाक्षरस्योत्तरस्य षट्चतस्रस्तु युग्मजाः
कला द्वाविंशतावेवमथाष्टाविंशतौ विधिः १८७

द्वादशात्र कलाः प्रावद्द्विकलोत्तरवत्ततः
कला द्वादश शेषास्तु स्युरेककलयुग्मवत् १८८
अथ द्वाविंशतिः प्राच्याः स्युश्चतुर्विंशतिः कलाः
द्वितीयपक्षवत्प्रान्ते त्वष्टौ द्विकलयुग्मवत् १८९
एषु त्रिष्वपि पक्षेषूत्तरश्चच्चत्पुटस्तथा
अतीतेन ग्रहेण स्याद्विदारीरथ कीर्तये १९०
शम्पात्रयेण प्रथमा परा तालत्रयेण तु
शम्पाद्वया तृतीया स्यात्तुर्या तालद्वयेन तु १९१
पञ्चमी शम्पातालाभ्यां षष्ठी स्यात्पञ्चपाणिना
चच्चत्पुटा सप्तमी स्यात्तास्तिस्रो मन्वते परे १९२
यथाक्षरस्य युग्मस्य द्विरावृत्त्या विदारिका
आद्या तथा द्वितीया स्यात्तयोरन्ते कलाद्वयम् १९३
एवमष्टादश कलास्ततो युग्माद्यथाक्षरात्
विदारी स्यात्तृतीयाऽन्ये विदारीरन्यथा जगुः १९४
आद्या द्विकलयुग्मेन द्वितीया च तथा भवेत्
यथाक्षरेणोत्तरेण तृतीयाऽन्येऽन्यथा जगुः १९५
पूर्वोक्ता द्वादश कला विदार्याद्या परा पुनः
यथाक्षरेणोत्तरेण शेषा युग्माद्यथाक्षरात्
एवमाश्रावणामाह श्रीमान्यज्ञपुराग्रणीः १९६
इत्याश्रावणा
स्युरारोहावरोहाभ्यां युक्ता विस्तारधातुजाः
भेदास्तलेन रिभितह्लादाभ्यां मिश्रिताः क्रमात् १९७
ततः करणभेदं द्विस्त्रिर्वाऽभ्यस्य विलीनवत् १९८
बहुलेन प्रयुक्ते चैकविस्तारे पुनस्तथा
द्विरभ्यस्येदेवमेव करणस्य भिदाः पराः १९९
यत्राऽऽरम्भविधिः स स्यादथ तस्य ध्रुवां ब्रुवे
गुरवोऽष्टौ द्वादशाथ लघवः पञ्च गा इति २००
पञ्चविंशत्यक्षरं स्यादाद्यखण्डं ततः परम्
लघवोऽष्टौ गुरुर्लाश्च चत्वारो गश्चतुर्लघुः २०१

गश्चेत्येकोनविंशत्या वर्णैः खरडं द्वितीयकम्
यस्यास्तृतीयखरडेऽष्टौ ला गोऽन्ते स्याद्ध्रुवाऽत्र सा  २०२
एकविंशे गुरौ कार्या विश्रान्तिः पूर्वखरडके
द्वितीयखरडे विश्राम्येद्गुरौ वर्णे चतुर्दशे  २०३
स्याद्द्वादशकलं खरडमाद्यमन्यत्तु षट्कलम्
चतुष्कलं तृतीयं स्यादथ तालोऽत्र कथ्यते  २०४
तालत्रयं च शम्पैका तालौ द्वौ शम्पयोर्द्वयम्
द्वौ तालौ संनिपातौ द्वावित्याद्ये शकले कलाः  २०५
यथात्तरस्योत्तरस्य क्रमाच्चच्चत्पुटस्य च
कला भवन्ति शकले द्वितीये च तृतीयके  २०६
इत्यारम्भविधिः
बहुलाविद्धकरणस्तोकव्यञ्जनधातुकः
विस्तारधातुना हीनो बक्त्रपाणिः प्रकीर्तितः  २०७
मुखप्रतिमुखे स्यातां तालाङ्गे द्वे च नाथवा
प्रवृत्तं चैककं वर्णाङ्गमत्राथ ब्रुवे ध्रुवाम्  २०८
गुरवः पञ्च लाः षट्च गुरवः षड्लघुद्वयम्  २०९
चत्वारो गास्तथा लाः स्युस्त्रयो गा लघवोऽष्ट च
यत्र स्याद्गुरुरन्ते सा वक्त्रपाणौ ध्रुवा भवेत्  २१०
या मात्रा वस्तुनोऽन्त्या स्याद्द्विकले मद्रके स्थिता
तस्यास्तालोऽत्र कर्तव्यः कलास्वष्टासु तन्मुखम्  २११
अथ प्रतिमुखं कार्यं चतुरावृत्तियोगिना
उत्तरेणापरेत्याहुः पूर्वोक्तो यः कलाष्टकः
सोऽत्र कार्यस्त्रिरावृत्तो मात्रया तु विदारिका
इति वक्त्रपाणिः
अङ्गुष्ठाभ्यां च तर्जन्या तन्त्रीं निष्पीड्य वदयन्
बिन्दुं मिथो मेलयेत वादिसंवादिनौ स्वरौ
बहुधा तद्गुणत्वेन प्रयुञ्जीतानुवादिनः  २१३
विवादिनोऽल्पकान्कुर्याद्विस्तारस्य भिदास्तथा  २१४
धात्वन्तरैर्मिश्रयित्वाऽभ्यस्येद्द्विस्त्रिः पृथक्ततः

केवलास्ताः प्रयुज्य द्विस्तासु मग्नानिवापरान्
धातून्यत्र प्रयुञ्जीत प्राहुः संखोटनाममूम्  २१५
गुरू द्वौ लघवोऽष्टौ च द्वौ गुरू च लघुर्गुरुः
यत्र द्वादश ला गोऽन्ते सा स्यात्संखोटनाध्रुवा  २१६
यथाक्षरद्विकलयोः स्युरत्रोत्तरयोः कलाः
नात्र संख्या विदारीणां भणिता भरतादिभिः  २१७
इति संखोटना
भेदा व्यञ्जनधातूत्था भेदैः करणधातुजैः  २१८
चित्रिता ललिताः स्निग्धाः क्रियन्ते करलाघवात्
आरोहबहुला यस्यां तामाहुः परिघट्टनाम्  २१९
गुरूण्यष्टौ च लघवः स्युश्चतुर्विंशतिर्गुरू
द्वौ षोडश लघून्यन्ते गुरुर्यत्र ध्रुवाऽत्र सा  २२०
संपकेष्टाकवद्यद्वा स्युः संपिष्टकवत्कलाः
संपिष्टके कलाः प्रोक्ता दश द्वादश वा पुरा  २२१
संपिष्टककलास्त्वत्र द्वादशैवेति संमतम्
द्वादशानां दशानां च प्राहुरन्ये समुच्चयम्  २२२
संपक्वेष्टाकतालं च द्विकलीकृत्य केचन
तद्द्वादशकला तालयोगमत्र प्रचक्षते  २२३
यथाक्षरद्विकलयोः संपक्वेष्टाकयोरिह
अष्टादश कलाः केचिदाचक्षत समुच्चिताः  २२४
इति परिघट्टना
विस्ताराविद्धकरणभेदश्मिश्रप्रयोगतः
यथा कलतलाख्याभ्यां मार्गासारितकं भवेत्
अन्ये कलतलोन्मिश्रकरणं लक्ष्म चक्षते  २२५
गाश्चत्वारो लघून्यष्टौ गौ द्वावष्टौ लघून्यथ  २२६
गौ ल इत्याद्यखण्डं स्यादेवं खण्डद्वयं परम्
यस्यामसौ ध्रुवा ज्ञेया मार्गासारितसंश्रया  २२७
एकं चञ्चत्पुटे खण्डमुत्तरे शकलद्वयम्
कनिष्ठासारितोक्तेन कार्यस्तालकलाविधिः  २२८

इति मार्गासारितम्
प्रयोगोऽभिसृतस्य स्यात्तथा परिसृतस्य चेत्
तथा लयान्तरगतौ वाद्यतालकलाविधौ
माधुर्यं सौकुमार्यं च तदा लीलाकृतं भवेत्  २२९
षड्जग्रामस्थजात्यंशे यद्गीतं वार्तिके पथि
आसारितं तदेवोक्तं धीरैरभिसृताह्वयम्  २३०
जात्यंशे मध्यमग्रामसंस्थे परिसृतं त्विदम्  २३१
अन्ये तु माषघातादिसप्ताङ्गमपरान्तकम्  २३२
ब्रुवतेऽभिसृतं तत्तु प्रदानादिनवाङ्गकम्
प्राहुः परिसृतं मृग्यं तालाध्याये लयान्तरम्  २३३
गीतकत्रयसंयोगादेवं लीलाकृतं त्रिधा
प्रयोगौ द्वौ पदैश्चास्य सार्थकैश्च निरर्थकैः  २३४
वीणावाद्यं मानतालयुक्तं शम्पादिवर्जितम्
आहुरेके मानहीनमपि त्वाह विशाखिलः  २३५
ध्रुवायां तूभयस्तालः परैस्त्वनियमात्मकः  २३६
इति लीलाकृतम्
आसारितत्रयं पूर्वं तालाध्याये निरूपितम्
यथाक्षरं द्विसंख्यातं त्रिसंख्यातमिति त्रिधा  २३७
प्रत्येकं तस्य चाऽऽवृत्तिर्वर्णालंकारशोभना
वृत्तित्रयेण वाद्यैश्च तत्त्वाद्यैः करणेन च
धातुना चित्रिता कार्या बुधैर्वीणाविधाविह  २३८
इत्यासारितत्रयम्
आलापिनीगतं लक्ष्म वक्ष्ये लक्ष्यविदां मतम्
नवमुष्टिमितो दैर्घ्ये वैणवः सुषिरान्तरः  २३९
अङ्गुलद्वंद्वपरिधिः प्राग्वद्ग्रन्थ्यादिवर्जितः
श्लक्ष्णः समः सुवृत्तश्च दण्डः स्यात्ककुभं दधत्  २४०
अङ्गुलद्वयविस्तारमङ्गुलार्धायतं तथा
तदर्धं पिण्डसंयुक्तमुन्मुखं पत्रिकोज्झितम्  २४१
एकदण्डमधोभागे शङ्कुना तु विराजितम्

चतुरङ्गुलदैर्घ्येण बहिर्मध्योन्नतेन च  २४२
तस्य तुम्बं परीणाहे द्वादशाङ्गुलसंमितम्
चतुरङ्गुलवक्त्रं च दन्तनाभिसमन्वितम्  २४३
अग्राादधस्तात्पादोने मुष्टियुग्मे निबध्यते
अत्र मेषान्त्रतन्त्री स्यात्सूक्ष्मा श्लक्ष्णा समा दृढा  २४४
कर्परं नारिकेलोत्थं दोरको दोरिकास्तथा
त्रीण्येतानि निबध्यन्ते यत्र साऽऽलापिनी मता  २४५
दशमुष्टिमितं दण्डमत्राऽऽहुः खादिरं परे
पट्टसूत्रमयीं तन्त्रीं यद्वा कार्पाससूत्रजाम्  २४६
रक्तचनद्नजान्सर्वान्वीणादण्डान्परे जगुः
दशमुष्ट्यधिकं मानं क्वचिल्लक्ष्येषु दृश्यते  २४७
तुम्बं वक्षसि निक्षिप्य वामाङ्गुष्ठेन तस्य च
मूलमुत्पीड्य धृत्वा तामथ मध्यमया सुधीः  २४८
दक्षिणस्यानामया वा वादयेद्विदुधातुवत्
बिन्दुहस्तेन वा मन्द्रे मध्ये तारे च वादयेत्  २४९
त्रयस्तु दक्षिणात्पाणेश्चत्वारो नामतः स्वराः
इत्युक्तं कैश्चिदाचार्यैरपरे त्वन्यथा जगुः  २५०
मध्यमो मुक्तया तन्त्र्या तर्जन्याद्यङ्गुलीत्रयात्
वामस्यानामिकावर्ज्यास्त्रयः स्युः पञ्चमादयः  २५१
मुक्ततन्त्र्याऽथ षड्जः स्यादृषभस्तर्जनीभवः
गान्धारो मध्यमाङ्गुल्या दक्षिणेनाथ वादनम्  २५२
आरोहेणावरोहेण सप्तकद्वितये भवेत्
एभिः स्वरैर्विरचितं विचित्रं रागमालपेत्  २५३
गायेद्गीतं निबद्धं च प्रवीणो वीणयाऽनया
इदमालापिनीलक्ष्म श्रीनिःशङ्केन कीर्तितम्  २५४
इत्यालापिनीलक्षणम्
किंनरी द्विविधा लघ्वी बृहती चेति कीर्तिता
तत्र लघ्वीगतं लक्ष्म सांप्रतं प्रतिपाद्यते  २५५
स्याद्वितस्तित्रयं दैर्घ्ये मानं पञ्चाङ्गुलाधिकम्

पञ्चाङ्गुलः परीणाहो वेणुदण्डस्य यत्र च २५६
गर्भेऽस्य व्यापकं रन्ध्रं ककुभः शाकदारुजः
सार्धद्व्यङ्गुलविस्तारो दैर्घ्ये पञ्चाङ्गुलश्च सः २५७
तस्मादर्धाङ्गुलन्यूना दैर्घ्यविस्तारयोर्भवेत्
मध्ये कूर्मोन्नता लौही पत्रिका ककुभस्थिता २५८
गृध्रवक्षोऽस्थिनलिका कनिष्ठाङ्गुलिसंमिता
लौही कांस्यमयी यद्वा कीर्तिता सारिकाख्यया २५९
श्लिष्टा वस्त्रमषीमिश्रमदनेन चतुर्दश
चतुर्दशस्वरस्थाने दण्डपृष्ठे निवेशयेत् २६०
सप्तकस्य द्वितीयस्य यो निषादो भवेदधः
तस्य स्थाने भवेदाद्या सारिकाऽन्योर्ध्वमङ्गुलात् २६१
स्थापयेदन्तरे किंचित्किंचित्पूर्वाधिके परा
द्व्यङ्गुलावध्यष्टमीं तु पूर्वस्यास्त्र्यङ्गुलान्तरे २६२
स्थापयित्वा पराः षट्च पूर्वपूर्वाधिकान्तरे
चतुरङ्गुलपर्यन्तं सारिकाः संनिवेशयेत् २६३
तुम्बं दण्डस्य ककुभस्याधःसंधौ निवेशयेत्
तृतीयतुर्यसार्योस्तु मध्येऽधस्ताद्द्वितीयकम् २६४
पूर्वस्मादपरं तुम्बं विस्तारेऽभ्यधिकं मनाक्
दण्डाग्राद्द्व्यङ्गुलेऽधस्ताद्रन्ध्रं कृत्वाऽथ निक्षिपेत् २६५
चलशङ्कुं गले रन्ध्रं दधमानमतोऽङ्गुलात्
अधस्तादङ्गुलोत्सेधं मेढकं बाणपुङ्खवत् २६६
कृत्वा ततोऽग्रतः किंचित्स्थिरशङ्कुं निवेशयेत्
ततो लोहमयीं श्लक्ष्णां वर्तुलां च समां दृढाम् २६७
गजकेशोपमां तन्त्रीं निबध्य ककुभे दृढम्
सारिकामस्तकन्यस्तामानीतां मेढकोपरि २६८
लग्नां द्वितीयप्रान्तेन वेष्टयेच्चलकीलके
शङ्कुं तं भ्रामयेत्तावद्यावत्तन्त्री दृढा भवेत् २६९
भ्रामणं वैपरीत्येन तन्त्रीशैथिल्यकारणम्
तन्त्रीदार्ढ्येऽथ दाढर्याय चलशङ्कोर्गलस्थिते २७०

छिद्रेऽन्यस्याथ संकीलं स्थिरशङ्कौ निवेशयेत्
लघ्वी सा किंनरी प्रोक्ता शार्ङ्गदेवेन सूरिणा २७१
अस्यां स्थायिनमारभ्य गणयेत्सप्तकद्वयम्
सारीककुभयोर्मध्ये तर्जन्याद्यङ्गुलित्रयात् २७२
वादयेत्किंनरीवीणातन्त्रीं दक्षिणपाणिना
वामस्य तिसृभिस्ताभिरङ्गुलीभिस्तु तन्त्रिकाम् २७३
तत्तत्सारीप्रदेशस्थां स्वरव्यक्त्यै निपीडयेत्
वितस्त्यभ्यधिका दैर्घ्ये परिणाहेऽङ्गुलाधिका २७४
लघ्व्याः स्याद्बृहती स्नायुमया तन्त्रीस्त्रितुम्बिका
आलापिनीवदस्यां च स्थाप्यं तुम्बं तृतीयकम्
अन्यल्लघ्वीगतं लक्ष्म बृहतीं किंनरीं श्रयेत् २७५
इति द्विविधकिंनरीलक्षणम्
किंनरीत्रितयं तत्र देशीसंसिद्धमन्यथा
बृहती मध्यमा लघ्वीत्यथाऽऽसां लक्ष्म वक्ष्यते २७६
तिर्यग्यवोदरैः षड्भिर्निस्तुषैः स्यादिहाङ्गुलम्
बृहतीदण्डमानं स्याद्दैर्घ्ये पञ्चाशदङ्गुलम् २७७
षडङ्गुलोऽत्र परिधिर्दण्डे दैर्घ्ये तु काकुभे
षडङ्गुलं शिरस्त्वस्य दैर्घ्यविस्तारयोर्भवेत् २७८
चतुरङ्गुलसंमानं द्व्यङ्गुलं तु तदुच्छ्रये
निक्षिपेत्काकुभं दण्डं वीणादण्डोत्तरे तथा २७९
दण्डांशः परिशेषोऽत्र तावान्यावति शेषिते
वीणादण्डान्तककुभशिरोमध्यान्तरे स्थितः २८०
तन्त्रीभागस्तृतीयांशाधिकत्र्यङ्गुलको भवेत्
मध्ये कूर्मोन्नतां लौहीं पत्रिकां शिरसि क्षिपेत् २८१
परितोऽर्धाङ्गुलन्यूना शिरसोऽसौ प्रकीर्तिता
वीणाशीर्षादधस्ताच्च सार्धद्व्यङ्गुलतः स्थितम् २८२
ऊर्ध्वाधोदैर्घ्यभाग्रन्ध्रं विस्तारेऽर्धाङ्गुलायतम्
तिर्यग्दैर्घ्यं तावदन्यद्रन्ध्रं चोभयतोमुखम् २८३
तिर्यग्रन्ध्रे चलं शङ्कुमूर्ध्वरन्ध्रनिविष्टया

लौह्या सारिकया युत्तप्रान्तान्तरं पुनः  २८४
सारिकायाः शिरोमूले बध्नीयात्काकुभे सुधीः
तन्त्रीरन्ध्रात्पुरः सान्ध्रीद्व्यङ्गुले मेढको भवेत्  २८५
स च स्यात्कर्तरीयुक्तो गले रन्ध्रान्वितोऽथवा
कर्तर्या गलरन्ध्रे वा सारिकां तां निवेशयेत्  २८६
तद्रन्ध्रे दराडान्तरालां विदध्यात्सयवाङ्गुलम्
मेढकात्पुरतः शङ्कुः स्थिरः सार्धाङ्गुलोत्तरे  २८७
तिर्यग्रन्ध्रे निवेशोऽस्य चलशङ्कुवदिष्यते
चलशङ्कुभ्रामणादि ज्ञेयं पूर्वोक्तरीतितः  २८८
गृध्रवच्चोस्थिजा यद्वा तत्पादास्थिसमुद्भवाः
कांस्यमय्योऽथवा लौह्यो नलिकाः सारिका मताः  २८९
सार्धाङ्गुलास्ताः परिधौ दराडपृष्ठे निवेशयेत्
यन्मेढकशिरोमध्यादुपक्रम्यान्तरं भवेत्  २९०
सारीमस्तकमध्यानां तदिदानीं निरूप्यते
आद्यान्तरं तत्र यवाधिकं पञ्चाङ्गुलं मतम्  २९१
द्वितीयमन्तरालं तु चतुरङ्गुलमुत्तरम्
तस्मात्तृतीयतुर्ये तु यवन्यूने मते सताम्  २९२
यवाधिकत्र्यङ्गुलं तु ज्ञेयं पञ्चममन्तरम्
यवोनद्व्यङ्गुलं षष्ठं सयवद्व्यङ्गुलं पुनः  २९३
अन्तरालं सप्तमं स्यात्सार्धद्व्यङ्गुलमष्टमम्
नवमं तु यवार्धेन सार्धाङ्गुलमितं मतम्  २९४
दशमं द्व्यङ्गुलं हीनं यवेनैकादशं ततः
द्वादशं तु तृतीयांशन्यूनं तस्मात्त्रयोदशम्  २९५
सतृतीयांशागुलं स्यादङ्गुलं तु चतुर्दशम्
द्वितीयान्तरतोऽधस्तान्नयस्येत्तुम्बमधोमुखम्  २९६
अन्यत्ककुभमूर्ध्वाधस्तुम्बकं संनिवेशयेत्
षट्त्रिंशदङ्गुलं चक्रे परिधिस्त्वाद्यतुम्बके  २९७
किंचिन्नयूनं ततस्तुम्बं परिधौ स्यादधस्तन
ईषदस्पष्टसरिका सारिकास्ता निवेशयेत्  २९८

छेवाटी पिञ्जरीत्येका बोट्टे भाषा तु माङ्गली ३१
वाङ्गाली माङ्गली हर्षपुरी मालववेसरी ३२
खञ्जिनी गुर्जरी गौडी पौराली चार्धवेसरी
शुद्धा मालवरूपा च सैन्धव्याभीरिकेत्यमूः ३३
भाषास्त्रयोदश ज्ञेया विज्ञैर्मालवकैशिके
विभाषे द्वे तु काम्बोजी तद्वद्देवारवर्धनी ३४
गान्धारपञ्चमे भाषा गान्धारी भिन्नषड्जका
गान्धारवल्ली कच्छेल्ली स्वरवल्ली निषादिनी ३५
त्रवणा मध्यमा शुद्धा दाक्षिणात्या पुलिन्दिका
तुम्बुरा षड्जभाषा च कालिन्दी ललिता ततः ३६
श्रीकण्ठिका च बाङ्गाली गान्धारी सैन्धवीत्यमूः
भाषाः सप्तदश ज्ञेयाश्चतस्त्रस्तु विभाषिकाः
पौराली मालवा कालिन्द्यपि देवारवर्धनी ३७
वेसरे षाडवे भाषे द्वे बाह्या बाह्यषाडवा ३८
विभाषे पार्वती श्रीकठ्यथ मालवपञ्चमे
भाषास्तिस्त्रो वेदवती भाविनी च विभाविनी ३९
ताने तानोद्भवा भाषा भाषा पञ्चमषाडवे
पोता भाषां शकामेके रेवगुप्ते विदुर्विदुः ४०
विभाषापल्लवी भासवलिता किरणावली
शङ्काद्यावलितेत्येतास्तिस्त्रस्त्वन्तरभाषिकाः ४१
चतस्त्रोऽनुक्तजनका बृहद्देश्यामिमाः स्मृताः
एवं षण्णवतिर्भाषा विभाषा विंशतिः स्मृताः
चतस्त्रोऽन्तरभाषाः स्युः शार्ङ्गदेवस्य संमताः ४२
भाषा मुख्या स्वराख्या च देशाख्या चोपरागजा ४३
चतुर्विधा मतङ्गोक्ता मुख्याऽनन्योपजीविनी
स्वरदेशाख्यया ख्याता स्वराख्या देशजा क्रमात् ४४
अन्योपरागजा ताभ्यो याष्टिकेनोदिताः पुनः
संकीर्णदेशजा मूला छायामात्रेतिनामभिः ४५
शुद्धाऽऽभिरी रगन्ती च त्रिधा मालववेसरी

मुख्या षडिति शेषास्तु सुज्ञाताः स्फुटलक्षणाः
नामसाम्यं तु कासांचिद्भिन्नानानपि लक्ष्मतः  ४६
अथ रागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गनिर्णयम्
केषांचिन्मतमाश्रित्य कुरुते षोढलात्मजः  ४७
रञ्जनाद्रागता भाषारागाङ्गादेरपीष्यते
देशीरागतया प्रोक्तं रागाङ्गादिचतुष्टयम्  ४८
प्रसिद्धा ग्रामरागाद्याः केचिद्देशीत्यपीरिताः
तत्र पूर्वप्रसिद्धानामुद्देशः क्रियतेऽधुना  ४९
शंकराभरणो घण्टारव आहंसदीपकौ
रीतिः पूर्णाटिका लाटी पल्लवीति बभाषिरे  ५०
रागाङ्गान्यष्ट गाम्भीरी वौहाटी खशिकोत्पली
गोल्ली नादान्तरी नीलोत्पली छाया तरङ्गिणी  ५१
गान्धारगतिकारञ्जावित्येकादश मेनिरे
भाषाङ्गान्यथ भावक्रीस्वभावक्रीशिवक्रियः  ५२
मरुकक्रीत्रिनेत्रक्रीकुमुदक्रीदनुक्रियः
ओजक्रीन्द्रक्रियो नागकृतिर्धन्यकृतिस्तथा  ५३
विपायक्रीः क्रियाङ्गाणि द्वादशेति जगुर्बुधाः
त्रीण्युपाङ्गानि पूर्णाटो देवालश्च गुरुञ्जिका  ५४
चतुस्त्रिंशदिमे रागाः प्राक्प्रसिद्धाः प्रकीर्तिताः
अथाधुना प्रसिद्धानामुद्देशः प्रतिपाद्यते  ५५
मध्यमादिर्मालवश्रीस्त्रोडी बङ्गालभैरवौ
वराटी गुर्जरी गौडकोलाहलवसन्तकाः
धान्यासीदेशिदेशाख्या रागाङ्गाणि त्रयोदश  ५६
डौम्बवन्यासावरी वेलावली प्रथममञ्जरी  ५७
आडिका मोदिका नागध्वनिः शुद्धवराटिका
नट्टा कर्णाटबङ्गालौ भाषाङ्गाणि नवाब्रुवन्  ५८
क्रियाङ्गत्रितयं रायकृतिर्गौडकृतिस्तथा
देवक्रीरित्यथोपाङ्गसप्तविंशतिरुच्यते  ५९
कौन्तली द्राविडी सैन्धव्यथ स्थानवराटिका

हतस्वरवराटी च स्यात्प्रतापवराटिका ६०
वराटयः षडिति च्छाया तुरुष्काद्ये तु तोडिके
महाराष्ट्री च सौराष्ट्री दक्षिणा द्राविडीत्यमूः ६१
उक्ताश्चतस्रो गुर्जर्यो भुञ्छिका स्तम्भतीर्थिका
छायाप्रतापोपपदे बेलाबल्यौ च भैरवी ६२